श्री

# नाटककथासंग्रहः

कालिदासादि महाकविभिः कृतानां नाटकानां संक्षेपेण
कथाप्रतिपादकः गद्यग्रन्थः

मद्रास् पच्चयप्प कलाशाला संस्कृतोपाध्यायेन,
पण्डित वे. अनन्ताचार्येण ग्रथितः

प्रयागनगरस्तव्येन बहुग्रन्थ मुद्रापकेण
रामनारायणलाल नाम्ना
प्रकाशितः

---

सन् १९३४

# उपोद्घातः

अहो! कालात् पूर्वं जगतीम् इमाम् अलंकृतवताम् अस्मत् पूर्वं महत्तराणां प्रतिभाप्रवाहपरीवाहभूतेषु भारतीविलासेषु दृश्य काव्यानां माधुर्यम् अन्यादृशम्। तदानीन्तनाः प्राज्ञाः परमरसिकाः कालिदासप्रभृतिभिः अभिरूपवरिष्ठैः प्रकाशितानि दृश्यकाव्यानि विदग्धतमैः नटैः अधिरङ्गम् अभिनीतानि निरीक्ष्य परमम् आह्लादम् अनुभवन्तः आसन्। इदानीं तु रसभरभरितेषु तेषु प्रत्यक्षरं समुल्लसन्तीं रसभावादिसंपत्तिम् यथावत् अभिनेतुम् अलम् भूष्णूनां नटानाम् अभावम् अनुभवद्भिः अस्माभिः प्रायेणैतानि श्रव्यकाव्यगोष्ठीमेव अवतारितानि इति नितरां विषीदामः। अथापि तेषु प्रत्यक्षरं प्रतिकलं नवनवमुद्भासमानैः रसभावादिकैः आकृष्टाः वयम् "मधुराणामाकृतीनां यथा तथावापि अनुभवः आह्लादायैव भवति" इति आलोच्य तत्कथाः संगृहीतुं प्रावर्तिष्महि। तदर्थं पदरचनायां प्रवृत्तायां रत्नकाञ्चनसमागमन्यायेन पदानां परस्परम् अन्यादृशं शोभातिशयं पुष्यन्तीषु तदीयासु वाक्यशैलीषु जाग्रतीषु करटघटितकठोराणि अस्मदीयानि वाक्यानि कथं कण्ठात् उपरि निःसर्तुम् प्रभवन्ति। तत् प्रायशः तदीयान्येव वाक्यानि एतत् ग्रन्थग्रथनसमये मम अविज्ञातमेव मदीयं जिह्वाग्रम्

अवतीर्णानि । इति इदं चौर्यं मम सहजम् अभूत् । तस्मादहं काव्यार्थचोरः इति कृत्वा दण्ड्यः पण्डितैः । ग्रन्थोऽयं पुरातन नाटकीय रसभावसंपत्तिसमुद्रं प्रविविक्षूणां विद्यार्थिनां यथा सुबहु उपकरिष्यति, तथा भगवती भारती देवी अनुगृह्णातु ।

Krishnapuram
Kodambekam Post
Madras, 16th April, 1934.

इति विदुषां विधेयः
V. Anantacharya

## ERRATA

| पेज | लाइन | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२ | २१ | रुदिनासु | रुदिताश्रु |
| २३ | ४ | समा | सक्षमा |
| २८ | १७ | राजपालको | राजा पालको |
| ४७ | १७ | पत्रोगोन | पश्चोर्गोन |
| ४६ | १८ | शुस्राव | शुश्राव |
| ५४ | ७ | अत्ससाद | आत्ससाद |
| ,, | १० | वसन्ना | वसन्तो |
| ५६ | ६ | मना | मनो |
| ५८ | २२ | भोदिकेन | भेदिकेन |
| ६० | ११ | श्रीक | श्रीके |
| ,, | ,, | हाम | हाम |
| ७५ | १४ | गृहीतं | गृहीतु |
| ७६ | १० | अ.र्यामिः | अश्वर्यामिः |
| ८४ | ६ | भवम् | भयम् |
| ८५ | ४ | प्रस्यान | प्रस्थान |
| ,, | ५ | प्रस्याने | प्रस्थाने |
| ,, | १२ | अविभ्रत् | आविभ्रन् |
| ८७ | ८ | वसति | वसतिम् |
| ८९ | २ | नौ | नो |
| ९० | ६ | पातिव्रत्या | पातिव्रत्यया |

# विषयाः

श्रीः

# मुद्राराक्षसकथासंग्रहः

पुरा खलु मगधेषु पुष्पपुरे सर्वार्थसिद्धिः नाम राजा बभूव। तस्य च वक्रनासप्रभृतयः नीतिनिपुणाः तीक्ष्णधिषणाः बहवः मन्त्रिणः बभूवुः। येषु एको राक्षसो नाम भूसुरः निरतिशयराजभक्तिः द्वितीयमिव राज्ञो हृदयम् आसीत्। सः अयं पार्थिवः सुनन्दां नाम क्षत्रियां मुरां नाम शूद्रां च द्वे भार्ये पर्यणैषीत्। तयोः द्वितीया एव नयनासेचनकेन लावण्येन, हृदयावर्जकेन सौशील्येन, प्रतिकलमङ्कुरितेन अनुरागेण च पत्युः इतरापेक्षया निरतिशयप्रेमपात्रम् आसीत्।

कदाचित् सर्वार्थसिद्धिः तपोवनात् आगतं महामहिमानं महर्षिम् एकम् आतिथ्येन निमन्त्रयांचक्रे। सबहुमानं सभक्त्यतिशयं सविनयातिरेकं च समम् उभाभ्यां महिषीभ्यां स्वयमेव पाद्यम् आनाय्य महर्षेः चरणौ प्रक्षालयामास। अथ ते वध्वौ भर्तृकरसंप्रोक्षितान् अतिपवित्रान् तत्पादोदकबिन्दून् विनयावनतेन शिरसा प्रतिजगृहतुः। सुनन्दायाः शिरसि नव बिन्दवः निपेतुः। मुरायास्तु एक एव। तत्समनन्तरमेव ते उभे महिष्यौ गर्भम् अधत्ताम्। पूर्णे च प्रसवसमये प्रशस्ते दिने, पुण्ये मुहूर्ते मुरा सर्वलक्षणसंपन्नं सुतमसूत। यं 'मौर्यः' इति पुराविदः वदन्ति। सुनन्दातु तस्मिन्नेव समये मांसपेशीमसूत। तां च निरति-

शयराजभक्तिः राक्षसः घृतपूर्णे कुम्भे निक्षिप्य ररक्ष । गते च काले कतिपये तस्मात् मांसपिण्डात् नव गर्भाः विनिस्सस्रुः । ये नव नन्दाः इति व्यपदिश्यन्ते । कुमाराः ते विभवानुरूपम् अभिवर्धिताः यथाकालं प्रवर्तितैः बालक्रियाकलापैः अधिकाधिकां सुषुमाम् अभिपुष्णन्तः क्रमेण शैशवम् अतिचक्रमुः ।

अथ च, वृद्धे सर्वार्थसिद्धौ, विरतिम् उपेयुषि नव नन्दाः राजानः बभूवुः । मौर्यश्च तैः सेनापतिपदे नियुक्तः अभूत् । अथ बहुतिथे काले व्यतीते मौर्यस्य शतं पुत्राः जज्ञिरे । येषु अचरमस्य चन्द्रगुप्ताख्यस्य प्रख्यातिः इदानीम् अपि भरतखण्डम् इदम् अलंकरोति । यत् नव नन्दाः अनपत्याः बभूवुः मौर्यश्च प्रबलेन अपत्यशतेन बलाढ्यः अभूत् ; तस्मात् कारणात् नन्दानां मौर्ये शङ्का समुत्पन्ना । अतश्च मौर्यः पुत्रशतेन समम् अन्धतमसावृते भूम्यन्तर्गृहे पातितो बभूव । प्रतिदिनम् एकहस्तप्रवेशपर्याप्तेन द्वारेण प्रतिपुरुषम् एकैकम् इति संख्याय अन्नकबलानि क्षिप्तानि । कतिपये तोयबिन्दवश्च विकीर्णाः । हन्त ! हन्त ! एकस्यापि अपर्याप्तेन अभ्यवहारेण एकशतेन पुरुषैः जीवितव्यम् अभूत् । एवम् अप्रतीकाराम् अतिदुस्सहाम् आपदम् अतिचिरम् अनुभवन्तः ते सर्वात्ययम् अचिर भाविनम् आशङ्क्य समयम् एवम् अकार्षुः । ‘ सर्वेषाम् अस्माकं भागम् एकः चन्द्रगुप्तः लभताम् । सः वैरनिर्यातनं करोतु ’ इति । सर्वैरपि तथैव अङ्गीकृते कतिपयेन कालेन चन्द्रगुप्त एक एव शेषः अभूत् ।

अत्रान्तरे सिंहलेश्वरेण प्रहितः दूतः पञ्जरस्थं सिंहमादाय नन्दान् एवं व्यजिज्ञपत् । ‘ महाराज ! लङ्केश्वरः पञ्जरम्

इदम् अनुद्घाट्य सिंहम् इमं विद्रावयमाणम् इच्छति ; कुशलाः कौशलम् अत्र प्रकटयन्तु ' इति । तद्याथातथ्यम् अजानन्तः मन्दाः नन्दाः चन्द्रगुप्त एव कदाचित् अत्र प्रभविष्यति इति मत्वा तं भूमिगृहात् उदतीतरन् । स आगत्य सकृदवलोकनमात्रेणैव तं मधूच्छिष्टमयं परिज्ञाय प्रतप्तया अयःशलाकया पश्यत्सु सर्वेषु सद्य एव तं सिंहं विद्रावयामास । एतादृशम् अस्य कौशलम् आलोक्य प्रगुणितमत्सराः ते नन्दाः तद्वधोपायमेव निगूढम् अन्विष्यन्तः आसन् । पौरजानपदास्तु अस्य राजलक्षणलक्षितां प्रशान्तगम्भीराम् आकृतिमालोक्य पूर्णचन्द्रमस इव अस्मै स्पृहयां चक्रुः । शौर्य धैर्यौदार्यादीन् भीमकान्तान् भूपतिगुणानालोक्य निरतिशयं स्नेहम् अस्मिन् आबबन्धुः । एतादृशप्रकृत्यनुरागेण भाविन्या दैवसंपदा च झटिति अपकर्तुम् अनीशाः नन्दाः अवसरम् अन्विष्यन्तः आसन् । तैः अन्नसत्राधिकारे नियुक्तः चन्द्रगुप्तोऽपि महति कृच्छ्रे वर्तमानः वैरप्रतियातनावसरं प्रतीक्षमाणः कालम् अत्यवाहयत् ।

अथ कदाचित् मध्याह्नसमये राजवीथ्यां दत्तदृष्टिः चन्द्रगुप्तः चाणक्यापरनामधेयं विष्णुगुप्तं नाम भूसुरमद्राक्षीत् । स च भूसुरः बुभुक्षया जवेन गच्छन् मार्गमध्यरूढेन दर्भाङ्कुरेण स्खलितपदः सक्रोधं परिक्रम्य तं दर्भाङ्कुरं समूलम् उत्पाट्य तत्रैव ज्वलनं प्रज्वाल्य यथा अणुरपि नावशिष्टं तथा तं दाहयामास । एवं तीव्रक्रोधः अयं भूसुरः नियतं नीतिशास्त्रविशारदः भविष्यति इति निश्चित्य चन्द्रगुप्तः तमुपसृत्य नामोच्चारणं प्रणनाम । परस्परकुशलानुयोगानन्तरं चन्द्रगुप्तः आत्मीयां दशां विस्तरशः निवेद्य भवानेव अस्याः आपदः माम् उत्तारयितुं शरणम् इति तस्य पादयोः पपात । चाणक्यस्तु,

भद्र, मा भैषीः यावच्छक्ति प्रयतिष्ये, दैवं चेन्न प्रतिकूलं मगध-राज्यमिदं भवद्धस्ते पतिष्यति इति तं सान्त्वयित्वा सत्वरमन्नसत्रं प्रविवेश। तत्र च भुक्तिशालां प्रविश्य निश्शङ्कं प्रसर्पन् प्रथमम् आसनम् अध्यासामास। तं दृष्ट्वा नन्दाः 'अहो धिक्, धिक्, महा-श्रोत्रियैः ज्ञानतपोवृद्धैः भूसुरैः अलङ्करणीयम् इदम् अग्र्यम् आसनं कोऽयमनात्मज्ञः वटुरध्यास्ते ?' इति, साटोपं निर्भर्त्सयन्तः मामैवम् इति निषेधताम् अखिलानाम् अमात्यानाम्, इमम् अग्निबाहुमूलम् आकृष्य अपसारयामासुः। सद्य एव अतिक्रुद्धः चाणक्यः तत्रैव शिखाम् आत्मीयाम् उन्मुच्य प्रतिज्ञाम् एवम् अकरोत्। 'दर्पविष्टान् दुर्बुद्धीन् इमान् समूलघातम् अहत्वा शिखाम् इमां न भन्त्स्यामि' इत्युक्त्वा प्रक्षुभितहृदयो नगरात् निर्गत्य पाटलिपुत्रे कृतावस्थानः स्वसहाध्यायिनं औशनस्यां दण्डनीत्यां ज्योतिश्शास्त्रे च परं प्रावीण्यम् उपगतम् इन्दुशर्माणं नाम ब्राह्मणं साहाय्याय प्रति-जग्राह। सः अयं इन्दुशर्मा चाणक्यस्य चारवृत्तिम् अनुतिष्ठन् क्षपणकलिङ्गधारी जीवसिद्धिः नाम भूत्वा कुसुमपुरम् उपगम्य नन्दामात्यैः सह कपटसख्यं जग्राह। विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः बभूव।

अथ चाणक्यः पर्वतकं नाम म्लेच्छराजम् उपगम्य तम् एवं बोधयामास—'अवसरः इदानीं तव नन्दान् अभिषेण-यितुम्। नन्दोन्मूलने सर्वात्मना अहं साहाय्यम् आचरिष्यामि। तदीयम् अर्धराज्यं भवते दास्यामि' इति। पर्वतकः तथेति अर्धराज्यप्रत्याशया प्रतिश्रुत्य महता म्लेच्छबलेन प्रस्थाय कुसुमपुरं न्यरुणत्। अथ नन्दानां म्लेच्छानां च सुमहति

प्रवर्तमाने पराजिताः नन्दाः चाणक्यरोपानले शलभताम् अया-सिषुः। राक्षसस्तु कुसुमपुरं चन्द्रगुप्तपर्वतकयोः हस्तगतम् अवलोक्य नन्दवंशवृद्धं सर्वार्थसिद्धिं सुरङ्गाद्वारेण बहिः निर्गमयामास। सोऽपि अपक्रम्य तपोवनम् अधिश्रितः तपस्वी चाणक्य-प्रहितेन बलेन घातितो बभूव। राक्षसश्च स्वामिनाशात् नितरां निर्विण्णः चन्द्रगुप्तेन सह कपटसख्यं नाटयन् तद्वधे बहून् उपायान् वितन्वन् कुसुमपुरे एव कञ्चित् कालम् अयापयत्। प्रथमम् आभिचारिकप्रयोगैः काञ्चन विषकन्यकां निर्माय चन्द्रगुप्तवधाय प्राहिणोत्। पूर्वमेव राक्षसे जातशङ्कः चाणक्यः तत् कैतवं परिज्ञाय तां विषकन्यकां पर्वतेश्वरे प्रयोजितवान्। स च तपस्वी तस्याः बलिरभूत्। ततः प्रभृति चाणक्यः चन्द्रगुप्तशरीरे सहस्रगुणम-प्रमत्तः राक्षसं गत्यन्तरहीनं विधाय चन्द्रगुप्तसाचिव्यं ग्राहयितुम् उपायम् अन्विष्यन् आस्त। अथ च अर्धराज्याभिलाषिणं पर्वतक-पुत्रं मलयकेतुं भागुरायणनाम्ना प्रणिधिना रहसि 'पिता ते चाण-क्येन विषकन्याप्रयोगम् उत्पाद्य घातितः, तत् इतः परम् अत्र तव अवस्थातुम् असांप्रतम्' इति त्रासयित्वा अपवाहयाञ्चक्रे। लोके च 'राक्षसः चाणक्यापचिकीर्षया पर्वतकं विषकन्यया घातित-वान्' इति जनापवादं संचारयामास। पर्वतकभ्रातरं वैरोचकं 'तव भ्रात्रे दित्सितम् अर्धराज्यं भवते दास्यामि' इति विश्वास्य प्रतिजग्राह। अथ च सांवत्सरिकादेशेन चन्द्रगुप्तस्य अर्धरात्रसमये नन्दभवनप्रवेशो भविष्यति इति पौरान् विदितार्थानकरोत्।

तस्मिन्नेव समये अर्धराज्यप्रतिश्रवेण परां कोटिम् आनन्दस्य अधिरूढं कृताभिषेकं सर्वराजालंकारालंकृतं मणिमयकिरीट-

धारिणं वैरोचकं नन्दभवनप्रवेशाय चन्द्रगुप्तोपवाह्यां चन्द्रलेखां नाम गजवशामारोपयामास । परिचिततमैरपि अनभिज्ञायमानाकृतिम् एनं पौराः चन्द्रगुप्तः एव अयम् इति मेनिरे। अत्रान्तरे राक्षसप्रयुक्तेन दारुवर्मनाम्ना सूत्रधारेण चन्द्रगुप्तवधाय यन्त्रतोरणं सज्जीकृतम् आसीत्। स चन्द्रगुप्तोऽयम् इति मत्वा तत् तस्य उपरि पातयामास । अत्रैवान्तरे चन्द्रगुप्तनिषादी बर्बरको राक्षसप्रयुक्तः चन्द्रगुप्तवधाय कनकदण्डिकान्तर्निहिताम् असिपुत्रिकाम् आक्रष्टुकामः कनकशृङ्खलावलम्बिनीं कनकदण्डिकां करेण अवलम्बे । तया कनकदण्डिकया अभिहतजघना गजवधूः चकितवतया गत्यन्तरम् आरूढवती । प्रथमगत्यनुरोधेन प्रयुक्तं तदभ्रष्टलक्ष्यं पतद्यन्त्रतोरणं बर्बरकस्य उपरि निपपात । तेन हते बर्बरके दारुवर्मा यन्त्रतोरणनिपातनापराधेन आत्मवधं निश्चित्य सरभसम् उत्तुङ्गं तोरणस्थलम् आरुह्य यन्त्रघट्टनबीजं लोहकीलकं उत्पाट्य चन्द्रगुप्तबुद्ध्या वैरोचकं हस्तिनीगतमेव अवधीत् । अथ च वैरोचकपुरस्सरेण पदातिलोकेन एव लोष्टघातं हतो बभूव । अनन्तरम् अभयदत्तोनाम राक्षसप्रयुक्तः भिषक् चन्द्रगुप्तवधाय योगचूर्णमिश्रितम् औषधम् उपजहार । तत्प्रत्यक्षीकृत्य चाणक्यः कनकभाजने वर्णान्तरोपलम्भेन सविषमिदमौषधमिति निश्चित्य तमभयदत्तं तदेव औषधं पाययित्वा अवधीत् । अथ राक्षसः प्रमोदकं नाम शयनाधिकृतं महान्तम् अर्थराशिं पारितोषिकतया वितीर्य चन्द्रगुप्तम् अभिद्रोग्धुम् नियुयोज । तम् अतिशङ्कितः चाणक्यः कुतः अयं भूयान् धनागमः? इति पृष्ट्वा पूर्वापरविरुद्धप्रलापेन आलपन्तं विचित्रवधेन व्यापादयामास ।

अथ शयनागारे शयितं चन्द्रगुप्तं निशि निगूढं निहन्तुं बीभत्सकादयो राक्षसप्रणिधयः प्रथममेव प्रयुक्ताः शयनगृहस्य अधः सुरङ्गाम् एत्य न्यवसन् । तच्छयनगृहं चन्द्रगुप्तप्रवेशात्प्राक् चाणक्यः स्वयं प्रविश्य निपुणमवलोकयामास । तत्र कस्माच्चित् भित्तिच्छिद्रात् गृहीतभक्तावयवां पिपीलिकापङ्क्तिं निष्क्रामन्तीमवलोक्य पुरुषगर्भम् एतद्गृहम् इति निश्चित्य तस्मिन् दाह्यमाने धूमावरुद्धदृष्टयो बीभत्सकादयः ज्वलनस्मात् अभूवन् । अथ एतेषु सर्वेषु उपायेषु चाणक्यबुद्धिकौशलेन विफली भूतेषु निष्प्रत्याशो राक्षसः सुहृत्तमस्य मणिकारश्रेष्ठिनः चन्दनदासस्य गृहे पुत्रकलत्रादिकं न्यासीकृत्य नगरादपक्रम्य मलयकेतुम् आश्रित्य पितृवधामर्षितं तं चन्द्रगुप्तम् अभियोक्तुं प्रोत्साहयामास। चाणक्यस्तु कुसुमपुरवृत्तान्तं परिज्ञातुं निपुणकं नाम प्रणिधिं प्रेषितवान्। सः भिक्षुको भूत्वा यमपटं प्रसार्य गायन् मणिकारश्रेष्ठिनः चन्दनदासस्य गेहं प्रविवेश । तत्र च गीतानि गातुं प्रवृत्ते अस्मिन् गृहाभ्यन्तरात् राक्षसस्य कुमारः पञ्चवर्षदेशीयः कौमार सुलभेन कौतूहलेन उत्फुल्लनयनः निश्चक्राम । तदानीं हा! निर्गतो हा! निर्गत इति स्त्रीजनः कोलाहलम् अकरोत् । राक्षसस्य भार्या सरभसम् आगत्य तं कुमारम् आकृष्य संभ्रमप्रचलितात् करात् अंगुलीयकं विगलितमविज्ञाय अभ्यन्तरं प्रविष्टा । निपुणकः तत् अङ्गुलीयकं राक्षसनामाङ्कितम् अवलोक्य चाणक्याय प्रददौ। मुद्राम् इमाम् अधिगत्य चाणक्यो राक्षसवशीकरणाय बहूनि कपटतन्त्राणि प्रयोक्तुं प्रचक्रमे ।

तथाहि—अस्ति राक्षसस्य प्रियमित्रं शकटदासो नाम

कायस्थः। चाणक्यप्रणिधिः सिद्धार्थकः तेन सह कपट सख्यं ग्राहितः आसीत्। सन्ति च म्लेच्छराजलोकस्य मध्ये पञ्च प्रधानतमा राजानः, कुलूताधिपः चित्रवर्मा, मलयाधिपः सिंहनादः, काश्मीराधिपः पुष्कराक्ष्यः, सिन्धुदेशाधिपः सिन्धुषेणः, पारसीकाधिपः मेघनादश्चेति। ते च परया सुहृत्तया राक्षसम् अनुवर्तन्त इति कृत्वा, तान् घातयितुं राक्षसमलयकेत्वोः उपजापं जनयितुं च भाविकार्यजातं निपुणम् अभ्यूह्य लेखम् एकं लिलेख। यमवसरे प्रकाश्यमानं मलयकेतुः राक्षसेन चन्द्रगुप्ताय निगूढ-संधिकरणार्थम् अनुप्रेषितम् इति निस्सन्देहम् अनुसन्धाय विशुद्ध भावम् अपि तं निष्कासयिष्यति।

ततश्च सिद्धार्थकम् आहूय एवम् आदिदेश—'भद्र प्रयत्न-लिखितान्यपि श्रोत्रियाक्षराणि नियतम् अस्फुटानि भवन्ति। तत् इमं लेखं केनापि कस्यापि स्वयं वाच्यम् इति अदत्तबाह्यनामानं शकटदासेन लेखयित्वा उपनय। न च आख्येयम् अस्मै चाणक्यो लेखयति इति। सिद्धार्थकः तथा कृत्वा उपजहार। तं च लेखं चाणक्यो राक्षसनामाङ्कितया मुद्रया मुद्रापितवान्। अथ तं लेखं तां च मुद्रां सिद्धार्थकाय दत्वा, रहसि कर्तव्यानि बोधयित्वा तं विससर्ज। ततश्च शकटदासः चन्द्रगुप्तम् अभिद्रोग्धुं नित्यं प्रयतते इति दोषं प्रख्याप्य तस्य शूलारोपणम् आज्ञापयामास। सिद्धार्थको वध्यस्थानं गत्वा पूर्वमेव कृतसंकेतान् घातकान् अक्षिसंज्ञया पलाय-यित्वा शकटदासमादाय राक्षसम् उपजगाम। स च सुहृत्प्राणरक्षण-परितुष्टः मलयकेतुना सबहुमानं समर्पितानि भूषणानि स्वगात्रात् अवतार्य सिद्धार्थकाय विततार। तानि गृहीत्वा सिद्धार्थकः

तम् एवं विज्ञापयामास—'चाणक्यस्य विप्रियं कृत्वा न शक्यं मया पुनः पाटलिपुत्रं प्रवेष्टुम्। तत् इतः परम् इच्छामि अमात्यम् एव शुश्रूषितुम्' इति। तथेति राक्षसेन अङ्गीकृते पुनरपि निवेदयामास—'अमात्य, अत्र प्रथमप्रविष्टस्य मे नास्ति कोपि परिचितः। तदेतत् अमात्यस्य प्रसादम् अनया मुद्रया मुद्रयित्वा अमात्यस्यैव भाण्डागारे स्थापयितुम् इच्छामि; यदा प्रयोजनं तदा ग्रहीष्यामि' इति। राक्षसः को दोषः, एवं क्रियताम् इत्यङ्गीकृत्य स्वनामाङ्कितां मुद्रां विलोक्य, 'कुतः तदागमः' इति पप्रच्छ। सिद्धार्थकः, 'कुसुमपुरे चन्दनदासस्य गेहद्वारे पतिता मया आसादिता' इति विज्ञापयामास। राक्षसः तत् तथ्यम् इति विश्वस्य ताम् आदाय शकटदासम् एवम् आदिदेश। 'इतः परं अनयैव मुद्रया स्वाधिकारे व्यवहर्तव्यं भवता' इति। एवं चलति कार्ये चन्द्रगुप्तः पर्वतेश्वरेण धृतपूर्वाणि त्रीणि आभरणानि विश्वावसुप्रभृतिभ्यः चाणक्यप्रणिधिभ्यः त्रिभ्यो ब्राह्मणेभ्यः प्रतिपादयामास। ते च तानि विक्रेतुं राक्षसकटकम् अगमन्। राक्षसश्च तानि महार्हाणि आभरणानि मूल्यं प्रदाय जग्राह।

अत्रान्तरे चाणक्यो राक्षसस्य कपटसुहृदं क्षपणकं, 'राक्षसप्रयुक्तः अयं विषकन्यया पर्वतकेश्वरं घातितवान्' इति दोषं प्रख्याप्य नगरात् निर्वासयामास। सः राक्षसम् उपजगाम। अथ राक्षसकलत्रसंरक्षिणं चन्दनदासं राजाहितकारी इति बन्धनागारे क्षेपयामास। तदानीम् एव भागुरायणः अन्ये अपि भद्रभटप्रभृतयः चाणक्यप्रणिधयः चन्द्रगुप्तापरागव्याजेन अपक्रान्ताः मलयकेतुम् आशिश्रयन्। भागुरायणः स्वप्राणरक्षक इति कृतज्ञतया मलयकेतुना

अमात्यपदे प्रतिष्ठापितो बभूव। ततश्च चाणक्यः चन्द्रगुप्तेन सह कृतककलहं कृत्वा ततः अपक्रान्त इव अभूत्। राक्षसस्तु स्वप्रणिधिना विराधगुप्तेन सर्वम् एव चन्द्रगुप्तबलम् आकुलीभूतम्, चाणक्यं च ततः अपरागात् अपक्रान्तं परिज्ञाय भृशं तुतोष। अत्रान्तरे लब्धामात्यपदः भागुरायणः राक्षसस्य चाणक्य एव द्वेषः, न चन्द्रगुप्तस्य उपरि इति तैः तैः उद्बोधनैः मलयकेतोः मनसि महान्तं विकल्पं उत्पादयामास। अथ कतिपयकालानन्तरं राक्षसेन प्रोत्साहितो मलयकेतुः कौलूतप्रभृतिभिः सुहृद्भिः परिवृतः ससैन्यः चन्द्रगुप्ताभिषेणनाय प्रस्थाय पुष्पपुरस्य नातिदूरे सेनानिवेशम् अकरोत्। अरातिबलस्य संनिहिततया जातशङ्को मलयकेतुः मुद्राम् एकां भागुरायणहस्ते समर्प्य कटके अस्मिन् मुद्रालाञ्छितस्यैव प्रवेशो निर्गमो वा देयः इत्याज्ञापयामास।

एवं प्रचलति व्यवहारे, जीवसिद्धिः अवसरः इदानीं चाणक्यनिर्देशानुष्ठानस्य इति निश्चित्य विविक्ते निष्परिजनं मलयकेतुम् उपनिष्ठन्तं भागुरायणम् उपगम्य बहिः निर्गन्तुं मुद्रां ययाचे। तेन च किमुद्दिश्य गम्यते इति पृष्टे एवं प्राह— 'रहस्यम् एतत्। तथापि कथयामि श्रूयताम्। अहं तावत् मन्दभाग्यः पाटलिपुत्रम् अधिवसन् राक्षसेन मित्रत्वम् उपगतः। तस्मिन्नवसरे राक्षसः गूढं विषकन्याप्रयोगम् उत्पाद्य पर्वतेश्वरं घातितवान्। ततः अहं राक्षसमित्रम् इति कृत्वा चाणक्येन नगरात् निर्वासितः। इदानीमपि राक्षसेन किमपि तादृशं कर्म आरभ्यते, येन अहं जीवलोकात् अपि निष्कासिष्ये। तस्मादतिनृशंसकारिणम् इमम् विसृज्य यत्र कुत्रापि गमिष्यामि' इति। श्रुत्वैतत्, कथं राक्षसः एव

अस्मत्पितृघाती इति भृशं दूयमाने मलयकेतौ भागुरायणो मुद्रां दत्वा क्षपणकं विससर्ज । ततश्च सिद्धार्थकः पूर्वं चाणक्येन दत्तं राक्षसमुद्रालाञ्छितं लेखं स्वेन एव राक्षस भाण्डागारे निक्षिप्तपूर्वां तन्मुद्रालाञ्छिताम् आभरणपेटिकां च समादाय सत्वरं कटकात् निर्गच्छन् रक्षिभिः गृहीतः मलयकेतुनिकटम् आनिन्ये । 'कथम् अगृहीतमुद्रः कटकात् निर्गच्छसि ?' इति पृष्टे एवं व्यजिज्ञपत् अहं खलु राक्षसेन लेखम् इमं दत्वा चन्द्रगुप्तसकाशं प्रेषितः, कार्यगौरवेण त्वरायितः अस्मि । तत् क्षम्यताम् इति उक्त्वा लेखमर्पयामास । भागुरायणः कीदृशः अयं लेखः ? इति तमुद्घाट्य मलयकेतवे प्रादर्शयत् । स चैनमवाचयत् ।

"स्वस्ति यथास्थानं कुतोपि कोपि कमपि पुरुषविशेषम् अवगमयति । अस्मत्प्रतिपक्षं निराकृत्य अपि दर्शिता सत्यता सत्यवादिना । सांप्रतम् एतेषाम् अपि प्रथमम् उपन्यस्तसंधीनां अस्मत्सुहृदां पूर्वप्रतिज्ञातसन्धिपरिपणनप्रोत्साहनेन सत्यसन्धः प्रीतिम् उत्पादयितुमर्हति । एतेपि एवम् अनुगृहीताः सन्तः स्वाश्रयविनाशेन उपकारिणम् आश्रयिष्यन्ति । एतेषां मध्ये केचिदरेः कोशदण्डाभ्यां अर्थिनः । केचित् विषयेणेति । अलंकारत्रयञ्च सत्यवता यदनुप्रेषितं तदुपगतम् । मया अपि किञ्चित् अनुप्रेषितं तदुपगमनीयम् । वाचिकं च आप्ततमात् अस्मात् श्रोतव्यम् " इति । वाचिकं किमिति पृष्टे सिद्धार्थकः कौलूतादयः पञ्च राजानः चन्द्रगुप्तेन सह निगूढं सन्धिं विधित्सन्ति इत्यादिकम् । अस्य एव लेखस्य विवरणं विधाय आभरणपेटिकां च प्रदर्शयामास । तामपि राक्षसमुद्राङ्किताम् आलोक्य समुद्घाट्य पश्यति मलयकेतौ स्वेन राक्षसाय सबहुमानं सादरञ्च

यत् अनुप्रेषितं आभरणत्रयं तत् तस्याम् आसीत्। ततश्च राक्षसेन चन्द्रगुप्तस्य उपायनी कृतम् इति लेखतो निश्चित्य मलयकेतुः बलवच्चुकोप। सद्य एव राक्षसं द्रष्टुं आचकाङ्क्ष। राक्षसस्तु कुमारेण समर्पितपूर्वस्य आभरणस्य सर्वार्थसिद्धये वितीर्णत्वात् विक्रीतेषु एकं परिधाय आजगाम। तदाभरणं स्वपित्रा धृतपूर्वम् अभिज्ञाय सत्यं चन्द्रगुप्तेन अस्मै प्रेषितम् इति निश्चित्य विवृद्धमन्युः मलयकेतुः किम् एतत्सर्वं इति तं पप्रच्छ। राक्षसस्तु लेखस्य शकटदासेन स्वहस्तलिखितत्वात् स्वमुद्रालाञ्छितत्वाच्च नाहं व्यलेखयम् इति वक्तुं न अपारयत्। आभरणादिविषयेषु विरचितस्य चाणक्यनीतिप्रयोगस्य सुश्लिष्टत्वात् यत्किमपि वक्तुम् अवकाशमलभमानः भृशं पर्याकुलीभूय मलयकेतुना निराकृतः गत्यन्तराभावात् पाटलिपुत्रं निववृते। अथ च क्रुद्धः कुमारः कौलूतादीन् कपटसुहृदः विज्ञाय तान् अजीघनत्।

अनन्तरम् असमीक्ष्यकारी एषः दुराचारः इति मलयकेतुम् उज्झित्वा सर्वे सैनिकाः सभयं पलायांचक्रुः। अवसरप्रतीक्षा भद्रभटप्रभृतयः मलयकेतुं संयम्य चाणक्यनिकटम् आनिन्युः। सिद्धार्थकेन वृत्तान्तम् इमम् प्रबोधितः चाणक्यः तम् एवम् आज्ञापयामास। 'चन्दनदासः स्वगृहे निक्षिप्तं राक्षसकलत्रं नार्पयति। तत् त्वं सः सिद्धार्थकश्च चण्डालवेषधारिणौ तं शूलं आरोपतम्' इति। ततश्च राक्षसं तन्त्रेण स्वसमीपम् आनेतुम् पुरुषम् एकं प्राहिणोत्। स च पुरुषः राक्षसागमनमार्गे कस्यचित् द्रुमस्य शाखायां कण्ठम् उद्बध्नन् आसीत्। राक्षसेन व्यसनकारणं पृष्टः सः एवम् उवाच। ' अस्ति मणिकारश्रेष्ठी चन्दनदासो नाम। तस्य प्रियवयस्यः विष्णुदासो नाम

ममापि प्रियवयस्यः। स च चन्दनदासस्य राक्षसकलत्रप्रच्छादनापराधेन शूलारोपणं श्रुत्वा, तदश्रोतव्यश्रवणात् पूर्वमेव ज्वलनं प्रवेष्टुं संनह्यति। अहमपि विष्णुदासस्य अश्रोतव्यं यावत् न शृणोमि, तावत् आत्मानं व्यापादयिष्यामि' इति। तच्छ्रुत्वा राक्षसः प्रत्युवाच-'भद्र! गच्छ! गच्छ! शीघ्रं विष्णुदासं ज्वलनप्रवेशनात् निवारय, अहमपि इदानीं चन्दनदासं मरणात् मोचयामि।' इत्युक्त्वा सरभसं वध्यस्थानं गत्वा शूलायतनान् एवम् आह। 'भो भोः न खलु व्यापादितव्यः चन्दनदासः। यत्कृते अयं व्यापाद्यते सः राक्षसः अयं विधेयः अस्ति इति चाणक्याय निवेद्यताम्' इति। अनन्तरं तैः बोधितः चाणक्यः राक्षसं स्वचर्मोपमानाय्य मैत्रीं चक्रे। ततश्च तं चन्द्रगुप्तसाचिव्ये प्रतिष्ठाप्य स्वस्थो बभूव। चन्द्रगुप्तश्च राक्षसानुरोधेन मलयकेतवे पित्र्यमेव विषयं प्रत्यर्प्य, चन्दनदासस्यापि मोक्षम् आज्ञाप्य, राक्षसविन्यस्तसमस्तराज्यभारः सुखैकतानो बभूव। एवं चाणक्यो राक्षसस्य चन्द्रगुप्तेन सह मैत्रीं संपाद्य कृतकृत्यः परां कोटिमानन्दस्याध्यगच्छत्।

मुद्राराक्षसकथासंग्रहः संपूर्णः।

# वेणीसंहारकथासंग्रहः

पुरा खलु ज्येष्ठः पाण्डवो युधिष्ठिरः राजसूयं यज्ञम् आजह्रे। तत्र च अनुपमां समृद्धिम् अभिवीक्ष्य असूयाकषायितहृदयः दुर्योधनः शकुनिना सह संमन्त्र्य द्यूतं कर्तुमजातशत्रुम् आजुहाव। ततश्च अक्षशौण्डेन शकुनिना सह कपटद्यूते प्रवृत्ते प्रतिदेवनं पराजये वर्तमानः युधिष्ठिरः गवाश्वं दासीदासम् अशेषाणि धनानि अनुजान् आत्मानम् अन्ततः महानुभावां पाञ्चालीम् अपि पणम् अकरोत्।

अथ निर्मर्यादस्य दुर्योधनस्य वशे वर्तमानः दुश्शासनः पतिव्रतोत्तमां पाञ्चालीं केशेषु आकृष्य सभामध्यम् आनिनाय। निरस्य लज्जाम्, उल्लङ्घ्य मर्यादां, विधूय विनयं, दूरीकृत्य साधुवृद्धवचनानि, पतिव्रताललामभूतायाः पाञ्चाल्याः चेलापकर्षणाय प्रायतिष्ट दुर्मतिः दुश्शासनः। तदानीम् उदासीनेषु सत्यपाशसंयमितेषु पाण्डवेषु, धिक्शब्दगर्भम् अवनमितमुखेषु वृद्धगणेषु, विधिबलं विचिन्त्य वाचंयमेषु अन्यलम्येषु, कृष्णसर्पवेष्टितगात्रेव दुश्शासनकरस्पर्शेन प्रवेपमाना सा तपस्विनी पाण्डवसीमन्तिनी गत्यन्तराभावात् उच्चैः एवम् आचक्रन्द।

हा कृष्ण द्वारकावासिन् क्वासि यादवनन्दन।<br>
इमामवस्थां संप्राप्ताम् अनाथां किमुपेक्षसे? ॥ इति

अथ भगवतः कमलाकान्तस्य निरुपाधिकया करुणया कटितटम् अस्याः पयःपारावारतरङ्गपरंपराभिः इव निरर्गलम्

उद्गलन्तीभिः दुकूलपरंपराभिः आच्छादितम् अभूत् । चिर-कालचेलापकर्षणप्रयासपरिश्रान्तबाहुः दुरात्मा दुश्शासनः तत्पातिव्रत्यदहनदग्धगात्र इव प्रसारितपाणिः पपात पृथिव्याम्। तस्याद्भुतस्य दर्शनेन सदसि कोलाहले वर्तमाने दुस्सहक्रोध-प्रस्फुरदोष्ठपुटः भीमसेनः करेण करं समुत्पिष्य सरभसम् समुत्थाय सिंहनादम् एकं विससर्ज । तेन सिंहनादेन प्रशान्ते कोलाहले गभीरेण स्वरेण एवम् अवादीत्—' यद्यस्य दुर्बुद्धेः दुश्शासनस्य वक्षः विदार्य रुधिरं न पिबेयं तर्हि न अहं सतां गतिम् अवाप्नुयाम् ' इति ।

अथ अतिमात्रम् अहंभावाध्मातहृदयः दुर्योधनः द्रौपदीम् उद्वीक्ष्य मन्दहासेन वदनं व्यादाय वसनम् अपोह्य सव्यम् ऊरुम् 'इत आस्यताम् ' इति साक्षिसंज्ञम् आस्फाल्य प्रदर्शयामास । तत् दृष्ट्वा रोषविस्फारितेक्षणः भीमसेनः ' अये दुरात्मन् दुर्योधन, यदि गदया अहम् एतम् ऊरुं न भिन्द्याम्, तदा अहम् आत्मनः सर्वं सुकृतफलं न अधिगच्छेयम् ' इति व्याजहार । एवम् असह्येन परिभवेण दह्यमानमानसा द्रुपददुहिता अपि, ' यावत् अयं दुरात्मा दुर्योधनः परासुः भूमौ न शेते तावत् अहं विमुक्ताम् इमां वेणीं न संहरिष्यामि ' इति प्रतिजज्ञे । अथ धृतराष्ट्रः दुर्योधनस्येदम् अत्युत्कटं दुश्चरितम् अभिवीक्ष्य नितराम् अनुतप्तहृदयः पाञ्चालीं पाण्डवांश्च बहुभिः सान्त्ववादैः समाश्वास्य पुनरपि राज्यं प्रत्यर्प्य इन्द्रप्रस्थं प्रति प्रस्थापयामास ।

अथ कर्णशकुनिप्रभृतिभिः दुरात्मभिः प्रबोधितेन दुर्योधनेन समाहूतः युधिष्ठिरः विदुरप्रभृतिभिः आप्तैः बहुशः निवार्यमाणोऽपि

भवितव्यताकृष्टमानसः सभामागत्य पुनरपि शकुनिना समम् अक्षैः देवनं प्रतिपेदे । प्रथमे देवने द्वादश संवत्सरान् अरण्यवासः, द्वितीये च संवत्सरमेकम् अज्ञातवासश्च पणोऽभूत् । उभयोरपि देवनयोः पराजितः अयं युधिष्ठिरः सहोदरैः पत्न्या च समं प्रस्थाय अरण्ये बहून् क्लेशान् अनुभवन् विराटनगरे कथं कथमपि अज्ञातवासमपि अतिवाहयाञ्चक्रे ।

एवं त्रयोदशसु संवत्सरेषु अतीतेषु युधिष्ठिरः स्मरणमात्रकृत संनिधानेन भगवता वासुदेवेन सह संमन्त्र्य दुर्योधनदुश्शासनादि-दुर्नयस्मरणादुस्सहरोषेण भीमेन बहुधा प्रतिषिद्धमपि सन्धि कर्तव्यतया अनुमेने अथ भगवान् देवकीसूनुः भरतकुलहित-काम्यया स्वयमेव प्रतिपन्नदौत्यः प्रस्थाय दुर्योधनस्य सदनं आससाद तत्र विशेषतः समलंकृते सभामण्डपे पूर्वमेव संमिलितैः भीष्मप्रभृतिभिः महनीयैः अभिनन्दितागमनः भगवान् सुरगुरुरिव सुधर्मायां सुरपरम् एवं व्याजहार ।

'विदितं खलु भवतां यद्युधिष्ठिरः कपटद्यूतनिर्जितः सानुजः सभार्यो वनवासे बहून् क्लेशानवाप्य कथं कथमप्यज्ञातवासकृच्छ्र-मपि अतिचक्राम' इति । सः अयं इदानीं धर्म्यं न्याय्यं च पन्थानम् आस्थितः सुयोधनेन समं सन्धिं कर्तुम् इच्छति । तस्य इदं मन्मुखान्तरितं वचनम् ।

इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान् कञ्चिदेकञ्च पञ्चमम् ॥ इति

श्रुत्वैतत् नितराम् अमर्षितः दुरात्मा दुर्योधनः पाण्डवपक्षपाती इति भगवन्तं संयन्तुमारेभे । तदा भगवान् विश्वरूपं प्रदर्श्य तेजः

संपातमूर्च्छितं तमवधूय पाराशर्यनारदजामदग्न्यप्रभृतिभिः मुनिवृन्दारकैः स्तूयमानः पाण्डवान्तिकमाजगाम । तच्च प्रियं मन्यमानः भीमसेनः पाञ्चालीं बहुविधैः सामवादैः समाश्वास्य सर्वानपि राजन्यान् समराय संनाहयामास ।

ततः परमतिभयंकरे सकलराजकुलक्षयावहे महति युद्धे प्रवर्तमाने दशभिः दिवसैः पाण्डवबलस्य महत् कदनं कुर्वन्तं भीष्मं निरुपाधिकया कृपया स्वयमेव प्रतिपन्नसारथ्येन भगवता वासुदेवेन संरक्ष्यमाणः विस्मयनीयपराक्रमः सव्यसाची, शिखण्डिनं पुरस्कृत्य युध्यमानः स्यन्दनात् पातयामास । अथ संशप्तकैः सह समरप्रवर्तनेन अन्यत्रापनीते अर्जुने, ' अयमेव समयो युधिष्ठिरादीन् विजेतुम् ' इति निश्चित्य महोत्साहाः धार्तराष्ट्राः चक्रव्यूहं परिकल्पयामासुः ।

तद्व्यूहस्य अभिमन्युमन्तरेण कस्याप्यनभिज्ञाततया अनिर्ज्ञातनिर्गममपि तं पुरस्कृत्य प्रविविक्षत्सु युधिष्ठिरादिषु, सत्वरमन्तः प्रविष्टवति च सुभद्रातनये जयद्रथः समागत्य अन्यान् अरौत्सीत् । अथ यावत्प्राणं प्रतिकुर्वन्तमपि एकाकिनमभिमन्युं सर्वेऽपि वीराः परिवार्य शरवर्षैः अवकिरन्तः रथात् अधः पातयामासुः । तत् श्रुत्वा पुत्रशोकदह्यमानमानसः अर्जुनः तनयमरणकारणं जयद्रथं ' श्वो दिनान्तात् प्रागेव हनिष्यामि, नोचेत् अग्निं प्रवेक्ष्यामि ' इति प्रतिजज्ञे ।

दुःस्वप्नदर्शनदूयमानमानसां भानुमतीं समाश्वासयन् दुर्योधनः दुश्शलामुखात् तदेतत् प्रतिज्ञातमाकर्ण्य, परेद्युः समरे समारब्धे, तं जयद्रथं समराङ्गणात् सुदूरे पृष्ठतः स्थापयामास ।

अथ लोहितायति सूर्ये जयद्रथस्य अनक्षिगोचरतया अग्निप्रवेश एव शरणम् इति नितरां निर्विण्णे धनञ्जये अपारकरुणानिधिः भगवान् चक्रपाणिः आत्मीयया अत्यद्भुतया मायया सूर्यमाच्छाद्य, आकालिकमन्धकारमसृजत् । तदानीमर्जुनानलप्रवेशदर्शनसुखमनुभवितुं पुरतः समागत्य कौरवचमूमध्यात् मुखमुन्नमयति जयद्रथे, भगवता वासुदेवेन दत्तसंज्ञः धनञ्जयः सत्वरम् अतिनिशितैः शरवर्षैः अग्रतः स्थितान् अरातिवर्गानपसार्य, अत्यद्भुतेन हस्तलाघवेन छिन्नं तच्छिरः, समन्तपञ्चकसमीपे पश्चिमां सन्ध्यामुपासीनस्य वृद्धक्षत्रस्य तज्जनकस्य उत्सङ्गे पातयामास । सोऽपि ससंभ्रमं तच्छिरो भुवि निपातयन्, 'यः अस्य जयद्रथस्य शिरः भूमौ पातयिष्यति, तस्य शिरः शतधा फलिष्यति' इति स्वस्यैव शापं स्वयम् अनुबभूव ।

तदनन्तरं जयद्रथवधेन नितराम् अमर्षितैः धार्तराष्ट्रैः रात्रियुद्धे समारब्धे, महेन्द्रदत्ताम्, अर्जुनवधार्थं चिरेण सरक्षितां शक्तिं कर्णो घटोत्कचवधेन चरितार्थाम् अकरोत् । द्रुपदविराटभूरिश्रवस्सोमदत्तबाह्लीकप्रमुखेषु वीरेषु निहतेषु, वयसा अशीतिपञ्चकमपि षोडशवर्षवत् सेनामुखे सञ्चरन्तं द्रोणं द्रष्टुमपि अशक्तेषु पाण्डवसैन्येषु पलायमानेषु, भीमसेनः स्वसैन्य एव कञ्चिदश्वत्थामनामानं कुञ्जरं निहत्य द्रोणान्तिके 'अश्वत्थामा हतः' इति पुनः पुनः उच्चैः श्रावयामास ।

पुत्रशोकाभिज्ञो द्रोणः तद्वाक्ये विश्वासमनधिगच्छन् अनुक्तपूर्वानृतम् अजातशत्रुमागत्य, 'अपि सत्यम् अश्वत्थामा हत' इति पप्रच्छ । अनिच्छन्नपि बन्धुवाक्यनिर्बद्धो जयलुब्धो

युधिष्ठिरः मन्दमन्दम् 'अश्वत्थामा हतः' इत्युक्त्वा किञ्चिद्विलम्ब्य 'कुञ्जरः' इत्यप्यभाणीत्। ततश्च अनाकर्णितवाक्यशेषः पुत्रशोकविदीर्णहृदयः शिथिलितप्राणो द्रोणः, सशरं शरासनं विसृज्य रथोपस्थ एव योगमास्थाय प्राणान् तत्याज।

अथ धृष्टः धृष्टद्युम्नः सरभसं समीपमुपसर्पन् असकृत् अर्जुनेन अधिक्षारं निवार्यमाणोऽपि तूष्णींभूतस्य तस्य पलित धवलमुत्तमाङ्गमसिलतया कण्ठात् अपातयत्। अश्वत्थामा तदेतद्वैशसं तत्सारथिमुखादाकर्ण्य, सुचिरं शोकसागरे निमग्नः कृपदुर्योधनाभ्यां समाश्वासितः कथञ्चित् प्रकृतिमापन्नः युद्धाय मनो दधे। पितुः अनन्तरं सैनापत्यमभीप्सतः द्रोणपुत्रस्य अस्य शोकरोषसंवर्धितान् वीरवादान् असहमानः दुर्योधनेन प्रतिज्ञातसैनापत्यः द्रोणप्रत्सरी कर्णः 'वक्तुं सुकरमिदं; दुष्करम् अध्यवसितुम्' इत्यादिभिः वाक्यैः तं परिजहास। परस्परवधव्यवसायपर्यन्ते वाक्कलहे प्रवर्तमाने कृपदुर्योधनाभ्यां कथंचित् सान्त्वितः क्रोधस्य परां काष्ठामधिरूढः अश्वत्थामा, 'यावदयं ताताधिक्षेपकारी कर्णो न निधनमुपैति, तावत् अहं शस्त्रं न गृह्णीयाम्' इति प्रतिजज्ञे।

अथ कृतकठोरप्रतिज्ञेन भीमेन प्रार्थितं दुश्शासनं संरक्षितुं सरभसमुपगतौ कर्णदुर्योधनौ भ्रातुः प्रतिज्ञाभङ्गभीरुः अर्जुनः सरभसमभिद्रुत्य शरवर्षैः अवाकिरत्। ततश्च घटोत्कचवधामर्षितया हिडिम्बया प्रेषितैः राक्षसैः अनुप्रविष्टः भीमसेनः दुश्शासनं भूमौ निपात्य नृसिंह इव हिरण्यकशिपोः तस्य वक्षोविदार्य रुधिरम् आपपौ। अर्जुनशरप्रहारमूर्च्छितं दुर्योधनमालोक्य सारथिः स्यन्दनमपवाह्य निकटोद्याने कस्यचित् न्यग्रोधतरोः

अधस्तात् निनाय । तदानीं दुश्शासनवधामर्षितं भीमसेन-धनञ्जयाभ्यामभियुक्तं पितरमभिवीक्ष्य कर्णतनयो वृषसेनः सरभसं सायुधः समागत्य धनञ्जयमभियुयोज ।

अथ असमाप्तमपि भीमेन सह समरव्यापारं विसृज्य विस्मयनीयं वृषसेनहस्तलाघवं विलोकयन् कर्णः धनञ्जयशर-प्रहारात् विह्वलं तमभिवीक्ष्य स्वयमपि कालपृष्ठं व्यापारयामास । अत्यद्भुतावहां धनुर्वेदशिक्षाचातुरीं प्रदर्शयतो धनञ्जयस्य मर्म-भेदिभिः बाणैः भिन्नदेहं रथमध्ये पतितं कुमारं वीक्ष्य पुत्रशोकदह्य-मानमानसः कर्णः संगलितमपि अश्रुगतमवधूय पुनरपि धनञ्जयमभियुक्तवान् । धनञ्जयेन समागतानां नकुलसहदेव पाञ्चालप्रमुखानां वीराणामेकदा शरवर्षैः विह्वलीकृतः कर्णः, स्वस्य दीनामवस्थां शोणितलिप्तमुखेन बाणेन कस्याञ्चित् पट्टिकायां विलिख्य, सुन्दरकनामानं सेवकं सुयोधनाय विससर्ज ।

तदानीमयाचितताल वृन्तेन उद्यानसमीरणेन लब्धसंज्ञो भूमौ उपविश्य दुश्शासनमनुशोचन् दुर्योधनः सुन्दरकं दृष्ट्वा 'अयमहम् आगतोऽस्मि' इति कर्णाय प्रतिसन्देशं प्रेषितवान् । अथ तस्य संग्रामावतरणाय सज्जीकृते रथे, दुश्शासनवधश्रवण-दूयमानमानसौ तत्पितरौ संजयेन समं रथमारुह्य तत्समीपमु-पगतौ । ततः तत्र तेषां तत्कालोचिते अतिकरुणे संलापे सुचिरं प्रवर्तमाने, सव्यसाची कर्णं निहत्य स्तोकावशिष्टप्रतिज्ञेन भीमेन सह दुर्योधनमन्विष्यन् तमेव उद्देशमुपजगाम । उभावपि तौ भीमार्जुनौ 'अनुलङ्घनीयः सदाचारः' इति कृत्वा गान्धारी-

धृतराष्ट्रौ प्रणम्य सूर्यस्य अस्तंगतत्वात् अवसितसमरौ सैन्यानि संहृत्य शिबिरमासेदतुः ।

अथ कर्णवधश्रवणानन्तरं उत्तिष्ठमानः सर्वाण्यायुधानि समादाय समागतः अश्वत्थामा, 'कर्णद्वेषी त्वं ममापि शत्रुरेव असि' इति दुर्योधनेन निराकृतः नितरां निर्विण्णहृदयः समरात् विरम्य, कृपकृतवर्मभ्यां साकं स्वच्छन्दसंचाराय अरण्यमगमत् । परेद्युः समरे समारब्धे, युधिष्ठिरेण निहते मद्राधिपे शल्ये, सहदेवशस्त्रानलं प्रविष्टे च शकुनौ, वृकोदरेणाभिद्रुतः दुर्योधनः समराङ्गणात् सत्वरं पलाय्य, कस्मिंश्चित् विपिनसरसि निमग्नः सलिलस्तम्भनीं विद्यामास्थाय निभृतं तस्थौ ।

ततश्च तदन्वेषणाय भगवता वासुदेवेन अधिष्ठितमेकरथमारुह्य समन्तात् पर्यटन्तौ भीमार्जुनौ अभिवीक्ष्य यदृच्छासंगतः कश्चित् वनेचरः पुरुषगर्भमेतत् इति तत्सरः प्रदर्शयामास । तत्र दुर्योधनपदलाञ्छनां पदवीं दृष्ट्वा तुष्टो भीमसेनः भयंकरेण सिंहनादेन दिशामुखानि मुखरयन् सरस्सलिलमवगाह्य समन्तात् आलोडयामास । तेन अतिक्रुद्धेन सरभसं सलिलात् उत्थितेन दुर्योधनेन समं भीमस्य भीमं गदायुद्धमारब्धमासीत् ।

अत्रान्तरे सुयोधनमित्रं चार्वाको नाम राक्षसः मुनिवेषधारी युधिष्ठिरं वञ्चयितुम्, 'भोः तृषितोऽस्मि पानीयमुपनीयताम्' इत्युच्चैः उद्घुष्यन् तदावासमाससाद । तेन यथावदुपचरितः चार्वाकः वार्ताप्रसङ्गे एवमब्रवीत् । प्रथमं भीमदुर्योधनयोः गदायुद्धे प्रवर्तमाने तीर्थयात्रायाः समागतेन सीरिणा रहस्याहितां

संज्ञामासाद्य दुर्योधनो दुश्शासनारिं गाढमभिहत्य, वीर-सुलभां गतिमनीनयत्। अथ भ्रातृवधशोकजं बाष्पं प्रमृज्य धनञ्जयो भ्रातृहस्तात् गदामाकृष्य, अकृतहस्त इति कृत्वा वासुदेवेन निवार्यमाणः अपि, दुर्योधनेन समं योद्धुम्, आरब्धवान्। दुर्योधनपक्षपाती बलदेवश्च देवकी सूनुमुपायतः स्वरथमारोप्य द्वारकां नीतवान्। ' अहं तु मुनिजनसुलभेन कौतूहलेन एतत् द्वन्द्वयुद्धमपर्याप्तमेव आलोक्य, अतिकठोरेण आतपेन बलवत् तृषितः इहागतः अस्मि ' इत्युक्त्वा चार्वाको यमागतम-गमत्।

अतिदारुणमेतमुदन्तमाकर्ण्य, सद्य एव मूर्च्छितौ द्रौपदी-युधिष्ठिरौ कथंचित् संज्ञां लब्ध्वा सुचिरम् अतिकरुणं विलप्य यावत् आदीपितां चितां प्रवेष्टुम् उद्युक्तौ, तावत् भीमसेनः दुर्योधनं निहत्य, परिपूरितप्रतिज्ञाभारः क्षतजाभिषेकपाटलितशरीरः दुर्लक्ष-व्यक्तिः 'क्व सा तिष्ठति पाञ्चाली' इति उच्चैः उद्घुष्यन्, युधिष्ठिरा-भिमुखमाययौ। निहतार्जुनो दुर्योधन एव पुनः अपि परिभवं कर्तुं आगच्छतीति मत्वा भयात् आशिरःपादमाकम्पमानां चटुलपद्मपत्रपर्यन्तीं पाञ्चालीं ' तिष्ठ, तिष्ठ, भीरु, क्वाधुनागम्यते,' इत्युक्त्वा केशेषु गृहीतुमियेष भीमसेनः।

तदनु ' दुरात्मन्, भीमार्जुनशत्रो, दुर्योधनहतक, एहि एकेनैव मुष्टिपातेन त्वां पातयामि ' इत्याद्यधिक्षिपन्तं वेगात् आत्मान-मालिङ्गितवन्तं रुदितासुपरिक्लिन्ननयनमजातशत्रुमालोक्य भीमसेनः, ' देव, नाहं दुर्योधनहतकः, अपि तु परिपूरितप्रतिज्ञामहोत्सवो भीमसेनः ' इति ससान्त्वमकथयत्।

अथ परां कोटिमानन्दस्य अधिरूढे युधिष्ठिरे भीमसेनः दुर्योधनशोणितोक्षितेन पाणिना पतिव्रताललामभूतायाः पाञ्चाल्याः दुश्शासनकराकृष्टं केशहस्तं संयमयामास। अथ एवं महान्तं विप्रलम्भं कृतवन्तं चार्वाकमन्विष्य निहत्य नकुलः सहदेवेनसमा-वासमाससाद।

अथ भगवान् वासुदेवः स्वयमर्जुनेन साकमभिषेकसामग्री-संपादनाय भृत्यवर्गान् आज्ञाप्य अनुभूतवेणीसंहारया द्रौपद्या सहितमजातशत्रुं द्रष्टुं सत्वरमाययौ। एवं भगवतः पुराणपुरुषस्य पुण्डरीकाक्षस्य निरुपाधिकया करुणया महत् कृच्छ्रमुत्तीर्णः तत्कालोपस्थितैः पाराशर्यनारदतुम्बुरुप्रभृतिभिः महर्षिभिः धृष्ट-द्युम्नप्रभृतिभिः आप्तैश्च परिवृतः सानुजः सभार्यो युधिष्ठिरः राज्याभिषेकमहोत्सवमनुबभूव।

इति

# मृच्छकटिककथासंग्रहः

आसीदुज्जयिन्यां चारुदत्तो नाम ब्राह्मणः। स युवा दीनानुकम्पी परोपकारनिरतः स्वयम् ऋद्धिमानपि अर्थिभ्यः मित्रेभ्यश्च सर्वस्वमात्मीयं दत्वा दरिद्रः बभूव। तस्य कदाचित् कामदेवायतने देवतोपस्थानार्थमागतया वसन्तसेनया गणिकया सह परिचयः सञ्जातः। सा च सर्वसुन्दरीणामुपरि वर्तमाना वेश्याजनसुलभं धनलोभं विहाय 'आत्मीयेनापि धनव्ययेन गुणवानेव युवा सेवितव्यः' इति कृतनिश्चया सर्वगुणानामेकनिवासभूते चारुदत्ते दृढानुरक्ता बभूव। कल्याणचरित्रः चारुदत्तोऽपि, यौवनसुलभेन कामेन आकृष्टहृदयः तस्यामनुरागमाबबन्ध। तदा प्रभृति, तामेव स्मृत्वा, परिक्षीणविभवतया अप्रतीकारं कामं कृच्छ्रेण अन्तः नियमयन्, कतिपयं कालमयापयत्।

अथ कदाचित् अस्तमिते सूर्ये, चारुदत्तः सायं सन्ध्यामुपास्य, मैत्रेयाख्येन वयस्येन सह, एकत्र बलवतीं वसन्तसेनागतामुत्कण्ठाम्, अपरत्र दुःसहदुःखप्रदं दारिद्र्यं च, अनुस्मृत्य, अनुशोचन् आस्त। तदानीं बलवति अन्धकारे झटिति बहिर्द्वारकवाटम् उद्घाट्य, सहसा अन्तः प्रविष्टा साध्वसकम्पमानगात्री वसन्तसेना त्वरिततरमभिपत्य, 'आर्य! परित्रायस्व माम्' इति तस्य पादयोः पपात। चारुदत्तेन च, 'न भेतव्यम्' ब्रूहि, कुतः परित्रातव्या भवती?' इति पृष्टे सैवं बभाषे। 'आर्य! कामदेवायतनोत्सवात् आरभ्य, गुणनिष्क्रीता दासी, भवन्तमुद्दिश्य,

प्रस्थिता अहं मध्येमार्गम्, मम दौर्भाग्येन दुर्वृत्तस्य राजस्यालस्य संस्थानकस्य दृष्टौ पतितास्मि। धूर्तः असौ अनिच्छन्तीमपि मां बलात् अनुबध्नन्, बलवति अन्धकारे वृत्तषण्डमनुप्रविष्टामपि भूषणशिञ्जितेन उपलक्ष्य अनुगच्छन्, द्वारि तिष्ठति ' इति।

श्रुत्वैतत् चारुदत्तः मैत्रेयमेवमादिदेश। गच्छ, मद्वचनात् ब्रूहि राजस्यालसंस्थानकम्, ' मम इयं गुणानुरक्ता वसन्तसेना, विरम अस्याः अनुबन्धात् ' इति।

मैत्रेयेण बहिः गत्वा एवमुक्ते संस्थानः एवमब्रवीत्। ' उच्यतां मद्वचनात् चारुदत्तः: " मयाभिसार्यमाणा वसन्तसेना तव गेहं प्रविष्टा : तां शीघ्रमेव प्रस्थाप्य निर्यातय; नोचेत् मरणान्तिकं वैरं भविष्यति। " इति।

चारुदत्तः तत्संदेशं मूर्खोयमित्यनाकर्णितकेनावज्ञाय वसन्तसेनया सह संलपन्नास्त। सा तु कञ्चित् कालं स्थित्वा एवमब्रवीत्। ' आर्य अतिक्रामति कालो गृहगमनाय। सर्वदा पापा मां भूषण कृते अनुसरन्ति। तत् इच्छामि इदमलङ्करणजातमार्यस्य गृहे निक्षेप्तुम् ' इति। दारिद्र्यपरवशः चारुदत्तोऽपि वसन्तसेनायाः प्रथमं प्रणयं विहन्तुमनिच्छन्, तत्संरक्षणाय मैत्रेयं नियुज्य, स्वयमेव अनुव्रज्य, तां स्वावासं प्रापयामास।

परेद्युः प्रभाते वातायनसमीपे सुखोपविष्टा वसन्तसेना परिजनं विसृज्य एकाकिनी आस्त। तदा शर्विलको नाम ब्राह्मणः समागत्य मदनिकां नाम चेटीं विविक्ते दृष्ट्वा सुचिरं सानुरागमवलोकयामास। पूर्वमेव तस्मिन् अनुरक्तया तया स्वागतेन अभिनन्दितः। शर्विलकः वस्त्रखण्डपिनद्धमाभरणजातं तस्याः हस्ते दत्वा,

साशङ्कः पार्श्वेषु दत्तदृष्टिः एवमाबभाषे। 'मदनिके! त्वयि चिरानुरक्तोऽहं त्वामनल्पेन धनेन निष्क्रीय दास्यात् मोचयितुं चौर्येण मया इदमासादितम्। तथाहि। पूर्वेद्युः निशीथे निश्शब्दे नगरे गाढान्धकारावृते दिगन्तराले कर्णीसुतविद्यायामनितर-साधारणं नैपुण्यमावहन् अहं चारुदत्तस्य गृहे यथाविधि भित्तौ सन्धिं कृत्वा अन्तः प्रविश्य, मैत्रेयहस्तस्थं जर्जरस्नानशाटीनिबद्धं दीपप्रभया उद्दीपितमाभरणजातमपश्यम्। आग्नेयेन कीटेन दीपं निर्वाप्य निश्शब्दपदमन्तिकं गत्वा मैत्रेयहस्तात् इदमादाय निरगाम्। तद् गच्छ वसन्तसेनायै समर्प्य आत्मानं मोचय' इति। तत् श्रुत्वा मदनिका 'अहो अन्याय्यमाचरितं; वसन्तसेनया इदं चारुदत्तस्य गृहे न्यासीकृतम्' इति प्रत्युवाच।

अथ अजानता मया कृतमित्यनुतप्तहृदयः किंकर्तव्यतामूढः शर्विलकः चिरं चिन्तयामास। ततः चारुदत्तेन प्रेषित इव भूत्वा वसन्तसेनायाः समीपमागम्य एवमुवाच। 'वसन्तसेने! मम वयस्यः चारुदत्तो गृहस्य जर्जरत्वात् दुरक्षमिदमाभरणजातमिति कृत्वा भवत्यै प्रतिनिर्यातयति. तत् प्रतिगृह्यताम्' इत्युक्त्वा प्रददौ।

वातायनसमीपोपविष्टा सर्वं मदनिकाशर्विलकयोः संवादं श्रुतवती वसन्तसेना 'आर्य! ममापि प्रतिदानमियं मदनिका। प्रतिगृह्यताम्' इति सव्याजं प्रतिग्राहयामास।

चारुदत्तस्तु वसन्तसेनया न्यासीकृतम् आभरणजातं चोरेणापहृतं विज्ञाय नितरां शोचन् विदितवृत्तान्तया धूतानाम्न्या सहधर्मचारिण्या वितीर्णामनर्घां रत्नावलीं तत्प्रतिमूल्यतया

वसन्तसेनायै मैत्रेयहस्तेन प्रेषितवान् । तदादाय वसन्तसेना 'आर्य चारुदत्तं प्रेक्षितुं प्रदोषे अहमागमिष्यामि' इति प्रतिसन्दिदेश ।

अथ अस्तमिते सूर्ये दुर्दिनद्विगुणितेनान्धकारेण आवृते दिगन्तराले मन्मथावेशस्य परां काष्ठामधिरूढा वसन्तसेना तत्कालोचितमभिसारिकावेषं धृत्वा चेट्या सह प्रस्थाय चारुदत्तस्य सदनमाजगाम । पूर्वमेव सोत्कण्ठः चारुदत्तः तां दृष्ट्वा परमानन्द भरितः स्वागतेन अभिनन्द्य अपरिमेयप्रेमरसनिर्भरहृदयां तां कृत्स्नां रात्रिमरीरमत् ।

अथ प्रभाते रतिखेदप्रसुप्तां तामालक्ष्य चारुदत्तो वर्धमानकं चेटमाहूय 'भद्र ! वर्धमानक ! प्रबुद्धां वसन्तसेनां प्रवहणमारोप्य पुष्पकरण्डकोद्यानमुपनय । अहमपि तत्रैव गमिष्यामि' इत्यादिश्य प्रययौ । तत्र च मैत्रेयेण सह सुचिरं संलपन् वसन्तसेनागमनं प्रतीक्षमाणः तस्थौ ।

अथ कतिपयमुहूर्तापगमे वर्धमानकेन प्रतोद्यमानं प्रवहणं दूरादेव दृष्ट्वा 'अये ! वसन्तसेना आगता' इति चारुदत्तः सरभसमुत्थाय प्रत्युज्जगाम । अन्तिकं गत्वा तस्मिन् प्रवहणे कुत्रचित् कोणे निलीनं निगलितैकचरणं खड्गहस्तं पुरुषमेकमपश्यत् । दृष्ट्वा च विस्मयखेदाभ्यामाविष्ट हृदयः चारुदत्तः 'अये, कथं वसन्तसेना न आनीता ? कः असौ पुरुषः ?' इति वर्धमानकं पप्रच्छ । स तु एवमब्रवीत् । 'आर्य ! यथानिर्देशमार्यायां प्रबुद्धायां प्रवहणमानीय, "आर्ये, सज्जं प्रवहणमधिरुह्यतां" इति व्यज्ञापयम् । सा तु, 'भद्र ! वर्धमानक प्रतीक्षस्व क्षणं, यावदात्मानं प्रसाध-

यामि' इत्युक्त्वा अन्तः प्रयासीत्। अहं तु यानास्तरणस्य विस्मृतत्वात् तदानयनाय प्रवहणेनैव गत्वा लब्ध्वागच्छामि इति अनिवेद्यैव तस्याः बहिर्गमम्। यानास्तरणमादाय आगतः पुनरपि 'आर्ये सज्जं प्रवहणमाधरुह्यतां पुष्पकरण्डकोद्यानस्थितस्य आर्यस्य सकाशं गन्तुम्' इति व्यजिज्ञपम्। तत्समनन्तरमेव नूपुरशब्दं श्रुत्वा प्रवहणं च भाराक्रान्तं विज्ञाय आर्यैव आरूढा इति कृत्वा प्रास्थापि। मध्येमार्गं राजपुरुषा अपि प्रवहणान्तः परीक्ष्य, वसन्तसेना एव आरूढा इति शशंसुः। तत् इदमाश्चर्यं पश्यामि। कुत्र गता आर्या? कोवा अयं पुरुषः? कदा आरूढः? इत्यत्र नकिञ्चिदपि जानामि' इति।

स तु पुरुषः प्रवहणस्थः एव चारुदत्तं प्रणम्य, 'आर्य, पाहि मां शरणागतम्' इति साञ्जलिबन्धमभ्यर्थितवान्। कस्त्वं? कुतः आगतोऽसि? कुतः परित्रातव्यः? इति पृष्टः साशङ्कितस्ततः दत्तदृष्टिरेवं बभाषे। आर्य! श्रूयताम् "अहमेतन्नगरनिवासी गोपालदारकआर्यको नाम। कतिपयदिवसेभ्यः पूर्वं कोऽपि सिद्धः समागत्य, मां दृष्ट्वा 'अचिरेण अयमुज्जयिन्यां राजा भविष्यति' इत्यादिदेश। तदाकर्ण्य राजपालको मां बन्धने निक्षिप्तवान्। मम तु कर्णीसुतविद्यायां परमं नैपुण्यमावहन् शर्विलको नाम ब्राह्मणो बाल्यात् प्रभृति अकृत्रिमं मित्रम्। तस्य साहाय्येन अहं बन्धनागारं भित्वा चरणत्राणं निगलमाच्छिद्य आरक्षकान् व्यापाद्य अपक्रम्य प्रधावन् यदृच्छया भवत्सदनपक्षद्वारसमीपमागमम्। तत्र च प्रस्थानाय सज्जीकृतं प्रवहणमिदं दृष्ट्वा, 'कस्य इदं स्यात्' इति चिन्तयति मयि, प्रवहणवाहकोऽयं

'भवति ! वसन्तसेने ! सज्जं प्रवहणमारोहतु भवती पुष्पकरण्डकोद्यानस्थितस्य आर्यचारुदत्तस्य सकाशं गन्तुम्' इति उच्चैः आजुहाव । तच्छ्रुत्वा अहमापन्नानुकम्पिनः भवतो दर्शनमेव मम अखिलमभद्रं निवारयिष्यतीति निश्चित्य, तेन अविज्ञातमेव प्रवहणमध्यरुहम् । तदानीं मम अपक्रमणेन नगर्यां महति कोलाहले सञ्जाते, मदन्वेषणाय प्रसृतौ चन्दनको वीरक इति च द्वौ नगररक्षाधिकृतौ इतस्ततः ससंभ्रमं परिभ्रमन्तौ, प्रवहणमिदमपश्यताम् ! अपृच्छताम् च 'भोः ! कस्येदं प्रवहणम् ? कः वा आरूढः ? कुत्र गच्छति ?' इति । प्रवहणवाहकः अयम् "आर्यचारुदत्तस्य इदं प्रवहणं; वसन्तसेना आरूढा; पुष्पकरण्डकोद्यानं गच्छति" इति प्रत्युवाच । अथापि स्वदृष्ट्या परीक्षितव्यमिति व्यवस्यतोः तयोः दैवानुकूल्येन, बाल्यात् प्रभृति मे परममित्रं चन्दनकः प्रवहणमधिरुरोह । तं दृष्ट्वा अहं 'वयस्य ! शरणागतोस्मि, पाहि माम्' इति तस्य पादौ अग्रहीषम् । स तु 'अभयं शरणागतस्य' इत्युक्त्वा झटित्यवरुह्य, 'हे ! वीरक ! सत्यं प्रवहणवाहको वदति । वसन्तसेना एव आरूढा । गच्छतु प्रवहणम्' इति उवाच । अथ वीरकेऽपि स्वयमालोकितुमुद्युक्ते, चन्दनकः, 'अरे कथं मयि अप्रत्ययः ते' इति निर्भर्त्स्य तमाकृष्य अपसारयामास । बलात् प्रवहणमारोढुमिच्छन् वीरकः चन्दनकेन केशेषु आकृष्य पतितः पादेन ताडितः निःश्वसन् 'अरे चन्दनक ! एहि कार्यालयम् । अधिकरणस्थाने व्यवहारं दास्यामि' इत्युक्त्वा प्रययौ । चन्दनकश्च महामात्मसंरक्षणाय खड्गमिमं दत्वा 'गच्छ यथेष्टमहमपि शर्विलकप्रभृतिभिः समं समये साहाय्यम-

चरिष्यामि ' इति मामुक्त्वा यथागतमगच्छत् । ' तत् क्षम्यतामननुज्ञातं प्रवहणाधिरोहणम् ' इति ।

तत् श्रुत्वा चारुदत्तो गोपालदारकस्य चरणात् निगलमपनीय ' सखे ! न भेतव्यम्, जीवितप्रदानेनापि शरणागतः संरक्षणीयः मया ! यादृच्छिकेन अनेन प्रत्यग्रमैत्रीलाभेन महान् प्रमोदः, तत् भवान् इतोगत्वा दुःखिनं बन्धुवर्गमानन्दयतु ' इत्युक्त्वा तं विससर्ज ।

अथ वसन्तसेनायाः अदर्शनेन भृशं दूयमानमानसः सव्ये क्षणस्फुरणेन मनसि आहितशङ्कः मैत्रेयेण सह स्वगृहमयासीत् ।

तत्र च सौवर्णैः आभरणैः आपूरितेन मृच्छकटेन क्रीडन्तं बालकं रोहसेनं वीक्ष्य रदनिकां गृहदासीमाहूय, ' कुतः इमानि आभरणानि आसादितानि ' इति पप्रच्छ । सा एवमब्रवीत्—' आर्य ! अनन्तरगृहदारकः सौवर्णमेकं शकटमानीय अनेन सह क्रीडितवान् । अनपगतकुतूहले एव अस्मिन् सः बालः तत्शकटमादाय स्वगृहं जगाम । अथ अहं मृन्मयमेकं शकटं निर्माय दत्तवती ' । तेन अयमपरितुष्टः ' सौवर्णमेव शकटं देहि ' इति रुरोद । तदानीं सुप्तप्रबुद्धा पुष्पकरण्डकोद्यानं गन्तुमात्मानं प्रसाधयन्ती वसन्तसेना ' किं निमित्तमयं रोदिति ? ' इति पप्रच्छ । ' गृहस्य दशावैषम्यमजानन् बालकोऽयं सौवर्णं शकटं याचते ' इति मया उक्ते, सा सद्य एव भूषणानि स्वगात्रात् अपनीय मृच्छकटं पूरयित्वा, ' भद्र ! अनेन कारय सुवर्णशकटम् '

इत्युक्त्वा प्रददौ। ' अयं च प्रवहणमारुह्य, आर्यस्य सकाशं प्रति प्रस्थिता ' इति।

तच्छ्रुत्वा चारुदत्तः, ' रदनिके ! न गृहीतव्यानि आभरणानि, किंतु प्रत्यर्पणीयानि ' इत्युक्त्वा मैत्रेयमेमाबभाषे। सखे ! न, शुद्धयति मे अन्तरात्मा। अत्याहितं वसन्तसेनायाः शङ्कते। तत् गच्छ भूषणानि इमानि आदाय तस्याः गृहम्। तद् वृत्तान्तं विज्ञाय भूषणानि प्रत्यर्प्य शीघ्रम् आगच्छ ' इति। तथेति मैत्रेयः प्रययौ।

अथ एकान्ते समुपविष्टं चारुदत्तमधिकरणस्थानात् दूतः आगत्य 'आर्य, अधिकरणिकः त्वां द्रष्टुमिच्छति ' इति आजुहाव। किमिदम् उपस्थिष्यते दैवेन ' इति शङ्काकलङ्कितमानसः चारुदत्तः दूतेन सह प्रस्थाय अधिकरणस्थानं गत्वा निर्दिष्टे आसने उपविवेश। अथ अधिकरणिकः चारुदत्तमेवमब्रवीत्। ' आर्य चारुदत्त ! अद्य राजस्यालेन संस्थानकेन व्यवहारो दत्तः। यथा वा पुष्पकरण्डकोद्याने सञ्चरता मया स्त्री शरीरम् एकम् निपतितं दृष्टम्। समीपं गत्वा निरीक्षिते सा बहुभूषणभूषिता वसन्तसेना नाम गणिका भूषणजातलुब्धेन केनापि बाहुपाशबलात्कारेण व्यापादिता' इति। 'निरलङ्कारैः आभरणस्थानैः, उच्छूनया ग्रीवानालिकया च तर्क्यते' इति। वसन्तसेनामातरमाहूय पृष्टे ' सा यौवन सुखमनुभवितुं वसन्तसेना चारुदत्तस्य गेहं गता ' इति प्रत्यवोचत्। तत् अयं व्यवहारो भवन्तमवलम्ब्य तिष्ठति। किमुत्तरं दीयते ' इति।

तत् आकर्ण्य चारुदत्तः अशनिहत इव विसंज्ञो भूमौ पपात।

अथ कथञ्चित् लब्धसंज्ञं तमधिकरणिकः एवमुवाच। 'आर्य चारुदत्त! किं कुर्मो वयं व्यवहारः त्वां पृच्छति। धैर्यमवलम्ब्य उत्तरं दीयताम्' इति।

चारुदत्तः एवमब्रवीत्। यद्वृद्धा वदति चारुदत्तगृहं गतेति, तत् तथ्यमेव। किंतु पूर्वेद्युः मम गृहे उषित्वा अद्य प्रातः स्वगृहं गता इति जाने' इति। अथ गच्छन्ती 'केनानुगता? किं पद्भ्यां गता? उत प्रवहणेन?' इति पृष्टे चारुदत्तः 'मम प्रत्यक्षं न गता। तत् न जाने विवरीतुम्' इति अवोचत्।

तत्रान्तरे वीरकः सामर्षः सरभसमागत्य 'भो! अधिकरणिक! अहं कार्यार्थी, दृश्यतां मम व्यवहारः' इत्यवोचत्। 'कस्ते व्यवहारः? इति पृष्टः सः एवमाह—"बन्धनागारं भित्वा पलायितं गोपालदारकमन्वेष्टुमादिष्टः अहं चन्दनकेन सह गच्छन् अपवारितम् प्रवहणम् एकम् अपश्यम्। चन्दनकः तदन्तः वीक्ष्य 'वसन्तसेना आरूढा पुष्पकरण्डकोद्यानं गच्छति। को दोषः। गच्छतु, इत्युवाच। 'अथ मयापि आलोकितव्यम्' इति वदन्तं मां केशेष्वाकृष्य बहुशः पादेन ताडयामास। श्रुत्वा आर्याः प्रमाणम्" इति। तदेतदाकर्ण्य चारुदत्तः 'शरणागतस्य गोपालदारकस्य अभयं प्रतिज्ञातं, तद्वृत्तप्रकाशनञ्च मम अनर्थान्तरमुत्पादयिष्यति' इति कृत्वा तूष्णीमभूत्।

अथ अधिकरणिकः 'हे वीरक! पश्चात् भवतः व्यवहारं द्रक्ष्यामः। यः एषः अधिकरणद्वारि अश्वः तिष्ठति, तमेनमारुह्य, पुष्पकरण्डकोद्यानं गत्वा दृश्यताम् 'अस्ति काचित् विपन्ना स्त्री न वा इति' इत्यादिदेश।

स तु गत्वा आगत्य 'दृष्टं मया स्त्री कलेवरम् एकं निपतितम्' इत्युवाच । तस्मिन् समये वसन्तसेनागृहं प्रति प्रेषितः मैत्रेयो मध्येमार्गं 'चारुदत्तः अधिकरणिकेन आहूतः, अधिकरणस्थानं गच्छति' इति श्रुत्वा साशङ्कः 'पश्चात् वसन्तसेनासकाशं गमिष्यामि' इति अधिकरणमण्डपम् आजगाम । संस्थानकस्तु मैत्रेयहस्तस्थम् आभरणजातं दृष्ट्वा 'इदं तदाभरणम् । यत्कृते वसन्त-सेना व्यापादिता' इति अधिकरणिकाय प्रदर्शयामास । नियति वैषम्यात् सर्वमपि चारुदत्तवाक्यम् अविश्वसनीयम् आसीत् ।

एवं संस्थानककृतस्य व्यवहारस्य सुश्लिष्टतया निरपराधः चारुदत्तः वधेन दण्ड्यो बभूव । नगरे च, 'चारुदत्तेन अर्थनिमित्ते वसन्तसेना व्यापादिता । तत् अयं वधेन दण्ड्यते' इति घोषणा च अकारि । श्रुत्वा च श्रवणकठोरात्तरां घोषणां कश्चित् पुरुषः सरभसम् एकचरणलग्नं निगडम् आकर्षन् आगत्य एवं बभाषे । "अहं तावत् राजश्यालस्य अनार्यस्य संस्थानकस्य प्रवहणवाहकः स्थावरको नाम । अनेन हि 'प्रवहणम् आदाय पुष्पकरण्डकोद्यानम् आगच्छ' इति आदिष्टः अहं तथेति प्रवहणम् आदाय गच्छन् मार्गस्य ग्रामशकटैः उपरुद्धतया आर्यचारुदत्तगृहस्य पक्षद्वारसमीपे प्रवहणम् अपनीय शकटोत्सारणाय अवरुह्य अपागच्छम् । तत्रान्तरे आर्या वसन्तसेना आर्यचारुदत्तस्य प्रवहणम् इति कृत्वा मम अविज्ञातमेव पृष्ठतः आरुरोह । आरूढां ताम् अजानन् मृत्पिण्ड-बुद्धिः अहं प्रवहणम् प्रतोद्य अस्य पापिष्ठस्य हस्ते समर्पितवान् अस्मि । सा च इमं 'प्रवहणविपर्ययेण आरूढा अहं परित्रातव्या' इति पुनः पुनः साञ्जलिबन्धम् अभ्यर्थितवती । नृशंसः अयं माम्

आहूय 'स्थावरक ! दुर्ललिता इयम् । पुनः पुनः अनुबध्यमाना अपि न मां गणयति । तं दरिद्रं चारुदत्तम् एव अनुरज्यति । तत् इमां मारय ' इति आदिदेश । ' नाहम् अकार्यं करिष्यामि ' इति मया प्रत्युक्ते स्वयमेव सरभसम् उपसृत्य, हा मातः ! हा आर्य चारुदत्त ! इति क्रन्दन्तीं ताम् बाहुपाशेन गले निबध्य, पातयामास । अथ, इदं कर्म मया प्रकाशितं भविष्यति इति कृत्वा मां निगलितचरणां प्रासादे निक्षिप्तवान् । इदानीं नगरघोषणया व्यवहारम् अन्यथा भूतं विज्ञाय सन्तापसञ्जातवेगः स्वयम् एव निगलम् आच्छिद्य इह अभ्यपतम् " इति ।

उपरते स्थावरकवाक्ये कश्चित् श्रमणकः वसन्तसेनया सह ससंभ्रमम् आजगाम । तं दृष्ट्वा ' अये वसन्तसेना जीवति ' इति महान् कोलाहलः सञ्जातः । ' कः त्वं ? कुतः इयं समासादिता ?' इति पृष्टः श्रमणकः एवम् आबभाषे । " अहम् आर्यचारुदत्तस्य पादसंवाहनपरः संवाहको नाम । उपरतविभवे चारुदत्ते मन्दभाग्यः अहं द्यूतोपजीवी भूत्वा तत्र पराजितो दशसुवर्णस्य कृते निर्बद्धोऽभूवम् । तदर्थं माथुरेण सभिकेन कदर्थीक्रियमाणे मयि दर्दुरको नाम मम बाल्यमित्रं समागत्य माथुरेण सह शुष्ककलहं कुर्वन् मम अपक्रमितुं संज्ञां दत्तवान् । अहं तु सत्वरम् अपक्रम्य प्रधावन् अपावृतद्वारमस्याः वसन्तसेनायाः गेहम् अनुप्रविश्य, 'आर्ये, परित्रायस्व माम्' इति अस्याः पादयोः अपतम् । इयं तु मद्वृत्तान्तम् आकर्ण्य चारुदत्तसंसर्गेण द्विगुणितादरमुपचर्य, हस्तात् कटकम् एकम् आकृष्य,'गच्छ एतेन मोचय आत्मानं' इति दत्तवती । ततः माथुराय कटकं दत्वा आत्मानं मोचयित्वा द्यूतानुभूतेन अपमानेन सञ्जात-

वैराग्यः श्रवणकवेषं पर्यग्रहीषम् । इतस्ततः सञ्चरन् पुष्पकरण्डकोद्याने राजश्यालेन संस्थानकेन दृष्टोऽस्मि । तेन निष्कारणवैरिणा मुष्टिप्रहारेण कदर्थीकृतः कृपालुना केनापि पुरुषेण मोचितः वापी समीपमवापम् । तत्र च चीवरखण्डं प्रक्षाल्य उत्तीर्य किञ्चिद्दूरं गच्छन् कस्मिंश्चित् शुष्कपर्णपुञ्जे नवपल्लवमिव स्त्रिया हस्तम् एकम् अलक्षयम् । अन्तिकं गत्वा शुष्कपर्णैः आवृतशरीराम् मृतप्रायां भूमौ निपतिताम् इमां वसन्तसेनाम् अपश्यम् । सा च कथंचित् लब्धसंज्ञा वक्तुं अशक्ततया हस्तसंज्ञया पानीयम् आचकाङ्क्ष । अथ सरभस पानीयम् आनीय दत्वा पटान्तेन अवीजयम् । मन्दं मन्दम् उन्मीलितनयनां तां 'किम् इदम्' इत्यपृच्छम् । सा तु उच्छून-ग्रीवतया गद्गदेन स्वरेण एवम् उवाच । श्रमणक ! वेशवाट-जन्मनः फलमिदम् । किम् अनेन श्रुतेन ? तथापि श्रूयताम् । पुष्प-करण्डकोद्यानस्थितम् आर्यचारुदत्तं उपगन्तुं व्यवसिता अहं मन्द-भाग्या प्रवहणविपर्ययेण राजश्यालस्य प्रवहणं अध्यरुक्षम् । तेन दुर्वृत्तेन, 'पुनः पुनः अनुनीता अपि न मां कामयसे' इत्युक्त्वा, एताम् अवस्थां प्रापिता अस्मि' इति । अथ इमां विहारम् आनीय परिव्राजिकाभिः कृतेन उपचारेण यावत् किंचित् स्वास्थ्यमापन्नाम् अलक्षयं, तावदेव चारुदत्तो वध्यस्थानं नीयते इति श्रुत्वा, सरभसम् इमाम् आदाय आगतोऽस्मि इति । तत्सर्वं श्रुत्वा अधिकरणिकः सेवकान् आहूय 'मुच्यतां निर्दोषः चारुदत्तः । संस्थानकश्च पापात्मा शूलम् आरोप्य वध्यताम्' इति आज्ञापयामास ।

अत्रान्तरे शर्विलको हर्षोत्फुल्लनयनः सरभसम् आगत्य चारुदत्तम् एवम् उवाच । 'आर्य, चन्दनकप्रभृतिभिः सहायैः अनुगतः

आर्यको रन्ध्रान्वेषी दुरात्मानं पालकं निहत्य यथासिद्धादेशं राजा बभूव। तेन अहं सन्देशं दत्वा भवत्समीपं प्रेषितः यथा, 'पुरा अहम् अननुज्ञातम् एव भवदीयं प्रवहणम् आरूढः। भवता संरक्षितः, इदानीं भवदनुग्रहेण राज्यमिदमासादितं मया। तत् इदं राज्यं सर्वं आत्मीयं कृत्वा यथेष्टं उपयुज्यताम्' इति।

तत् श्रुत्वा परमानन्दभरितः चारुदत्तः, तर्हि सद्य एव अचिराधिष्ठितराज्यो राजा द्रष्टव्यः इति उक्त्वा प्रचचाल। तदानीं राजसेवकैः अधिष्ठितः, पश्चात् बाहुबद्धो वधस्थानं नीयमानः संस्थानकः चारुदत्तमभिवीक्ष्य, 'आर्य परित्रायस्व माम्' इति तस्य पादयोः पपात। चारुदत्तश्च 'सखे! शर्विलक! मुच्यताम् अयम् असमीक्ष्यकारी' इति नियुज्य आर्यकेण राज्ञा संगतः। तेन बलवता उपचारेण अभिनन्दितः परां कोटिम् आनन्दस्य अध्यगच्छत्।

इति

# मालविकाग्निमित्रकथासंग्रहः

अस्ति विदर्भो नाम जनपदः । तत्र च माधवसेनो नाम राजकुमारः आसीत् । तस्य यवीयसी स्वसा मालविका नाम । अनुपमसौन्दर्यवतीं शैशवे पितुरङ्के लालयमानाम् ताम् अकस्मादागतः सिद्धादेशः साधुः दृष्ट्वा एवमाह—'संवत्सरमात्रमियं प्रेष्यभावम् अनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति'। तमिमं वृत्तान्तं माधवसेनः न ज्ञातवान् । तदमात्यस्य सुमतेः यवीयसी भगिनी पण्डितकौशिकी तु शुश्राव । ततः प्रतिदिनम् उपचीयमानाङ्गप्रत्यङ्गसौष्ठवा मालविका क्रमेण शैशवम् अतिनीतवती ।

तदानीम् मालवदेशे विदिशां राजधानीम् अधितिष्ठन् अग्निमित्रो नाम पुत्रः पुष्यमित्रस्य अभिजनादिभिः अखिलैः वरगुणैः अनूनः राजा आसीत् । तमेव मालविकायाः वरम् अनुरूपं निश्चित्य कुमारमाधवसेनः तस्मै दूतं विससर्ज । अग्निमित्रोऽपि माधवसेनेन सह संबन्धम् अभिनन्द्य दूतं संमान्य 'शीघ्रमेव पाणिग्रहणमङ्गलं निर्वर्त्यताम्' इति प्रतिसंदिष्टवान् ।

अत्रान्तरे माधवसेनस्य पितृव्यपुत्रः यज्ञसेनो नाम विदर्भेषु लब्धराज्यः आसीत् । तुल्याभिजनौ यज्ञसेनमाधवसेनौ राज्यनिमित्तम् अन्योन्यं बद्धवैरौ अभूताम् । विषयानन्तरत्वेन प्रकृत्यमित्रं द्विषन् अग्निमित्रः प्रतिश्रुतसंबन्धस्य माधवसेनस्य बलवान् आश्रयः बभूव । कदाचित् अग्निमित्रः मुद्गलं नाम अमात्यं यज्ञसेनस्य स्यालं निगृह्य बन्धने निक्षिप्तवान् । तेन प्रवृद्धवैरः यज्ञ-

सेनः प्रतिकूलकारिणः अग्निमित्रस्य अपकर्तुं समयं प्रतीक्षमाणः आसीत्।

माधवसेनः पाणिग्रहणमङ्गलं निर्वर्तयितुं वैवाहिकेन नैपथ्येन अलंकृतां मालविकाम् आदाय अमात्येन सुमतिना पण्डितकौशिक्या सैनिकैश्च समं विदिशां प्रति प्रतस्थे। यज्ञसेनस्य अन्तपालो मध्येमार्गम् अवस्कन्द्य माधवसेनं जग्राह। सैन्यसंकुलात् भीतां मालविकाम् अमात्यसुमतिः पण्डितकौशिक्या सह गूढम् अपवाह्य विदिशागामिनं सार्थवाहकुलम् अनुप्रविष्टः।

अथ अटव्यन्तरे गच्छन्तं सार्थवाहकुलम् आटविकाः प्रतिरोधकाः प्रतिरुरुधुः। उभयेषाम् अतिभयानके युद्धे प्रवृत्ते बलिभिः आयुधपाणिभिः तस्करैः पराङ्मुखीकृताः सार्थवाहाः पलायाञ्चक्रिरे।

भर्तृप्रियः सुमतिः पराभिभवकातरां मालविकां रिरक्षिषुः सुचिरं युध्वा सफलीकृतभर्तृपिण्डः प्राणैः भर्तुरानृण्यं प्रतिपेदे। भ्रातृमरणजनितं दुःखातिभारं सोढुम् अपारयन्ती पण्डितकौशिकी किंकर्तव्यतामूढहृदया मुहूर्तं मोहम् उपजगाम। अथ प्रतिपन्नसंज्ञा चक्षुः उन्मील्य ‘ धिक्कष्टम् मालविका कथम् आस्ते ? ’ इति यावत् दिक्षु चक्षुः विक्षिपति तावत् सा दुर्लभदर्शना संवृत्ता। तेन द्विगुणीकृतशोका, ‘ अहो कष्टादुपरि कष्टम् आपतितम्। ’ ‘ विपत् विपदम् अनुबध्नाति ’ इति लौकिकी गाथा न मिथ्या ’ इति विचार्य सुचिरम् अन्विष्यापि मालविकाम् अपश्यन्ती भ्रातुः शरीरम् अग्निसात्कृत्य पुनर्नवीकृतवैधव्यदुःखा विदिशानगरम् अवाप्य यतिवेषधारिणी काषायग्रहणम् अकरोत्।

निहतसहायाम् एकाकिनीं प्रवाते कदलीमिव प्रवेपमानां मालविकाम् अभिवीक्ष्य दयार्द्रहृदयाः ते तस्कराः नातिदूरे नर्मदातीरे अग्निमित्रेण राज्ञा अन्तपालदुर्गे स्थापितस्य देव्याः धारिण्याः वर्णावरभ्रातुः वीरसेनस्य हस्तं प्रापयामासुः। सोऽपि इमां 'शिल्पाधिकारे योग्येयं दारिका,' इति संदिश्य भगिन्यै धारिण्यै उपायनं प्रेषितवान्। सापि आकृतिविशेषप्रत्ययात् 'उत्कृष्टाभिजना भवितुम् अर्हति' इति संभाव्य तस्याम् अत्यन्तस्निग्धदृष्टिरासीत्।

अथ च परमनिपुणाम् अतिमेधाविनीं ताम् नाट्यशास्त्रम् अध्यापयितुम् आचार्यगणदासम् आदिष्टवती। भिन्नरुचीनां जनानां युगपत् समाराधनक्षमे नानारसभरिते स्वकुलविद्याभूते नाट्यशास्त्रे निरतिशयं प्रावीण्यम् आवहन् गणदासः गुणाधिकम् उपदेशपात्रम् आसाद्य नितरां तुतोष।

अत्रान्तरे आत्मना सह संबन्धेच्छया प्रस्थितं माधवसेनं दायादवशंगतम् अग्निमित्रः श्रुत्वा यज्ञसेनस्य एवं संदिष्टवान्—'भवतः पितृव्यपुत्रः कुमारः माधवसेनः प्रतिश्रुतसंबन्धः मम उपान्तिकम् उपसर्पन् अन्तरा त्वदीयेन अन्तपालेन अवस्कन्द्य गृहीतः। स त्वया मदपेक्षया सकलत्रसोदर्यः मोक्तव्यः। इति तस्य यज्ञसेनः प्रतिलेखम् एवम् प्रेषितवान्। यथा—तुल्याभिजनेषु भूमिधरेषु इयं राज्ञां वृत्तिः। अत्र मध्यस्थः पूज्यो भवितुम् अर्हति। सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय प्रयतिष्ये। अथ अवश्यमेव मया माधवसेनः मोचयितव्यः मुच्यतां भवता संयतः मुद्गलसचिवः मम स्यालः' इत्येवं कार्यविनिमयेन व्यवहरन्तम् अचिराधिष्ठितराज्यं

वैदर्भम् उन्मूलयितुमग्निमित्रः वीरसेनप्रमुखं दण्डचक्रम् आज्ञापितवान्।

अथ कदाचित् शिल्पाचार्यः शिल्पकौशलम् आत्मनः प्रदर्शयितुकामः चित्रशालायाम् अखिलपरिजनपरिवृतायाः धारिणीदेव्याः प्रतिकृतिं लिलेख। तत्र प्रत्यग्रवर्णरागाम् आचार्यस्य चित्रलेखाम् अवलोकयन्त्याः देव्याः धारिण्याः समीपम् अकस्मात् अग्निमित्रः आजगाम। उपचारानन्तरम् एकासनोपविष्टः स राजा चित्रगतायाः परिजनमध्यगतां मालविकां दृष्ट्वा 'किंनामधेयेयम् अपूर्वा दारिका तव आसन्ना आलिखिता' इति देवीम् अपृच्छत्। अवधीरितवचनेन शङ्कितेन राज्ञा पुनः पुनः अनुबद्धापि सा यावत् न कथयति, तावत् तस्याः कनीयसी स्वसा कुमारी वसुलक्ष्मीः आख्यातवती 'आवुत्त एषा मालविका' इति।

राजा तु प्रथमदर्शन एव तदीयेन रूपातिशयेन आकृष्टहृदयः तस्यां दृढानुरक्तः बभूव। यद्वा आदृष्टप्रतिकृतिं ताम् प्रत्यक्षतः द्रष्टुम् आचकाङ्क्ष। देवी धारिणी तु चित्रदर्शनात् प्रभृति मालविकां सविशेषं राज्ञो दर्शनपथात् रक्षन्त्यासीत्।

राजा वृत्तान्तमिमं नर्मसचिवाय गौतमाय निवेद्य 'मालविकां प्रत्यक्षदर्शनां कर्तुम् उपायः चिन्त्यताम्' इति आदिदेश। सोऽपि निपुणतरम् उपायम् उपक्रान्तवान्। यथा—अस्ति हरदत्तो नाम गणदासात् अपरः नाट्याचार्यः। सः इरावतीं नाम राज्ञः यवीयसीं भार्याम् नाट्यविद्याम् अध्यापयन् आस्त।

नर्मसचिवः गौतमः हरदत्तगणदासौ उपसृत्य उपजापेन परस्परं स्पर्धाम् उत्पादितवान्। गणदासं गत्वा 'हरदत्तः भवन्तं

'गणदासः न मे पादरजसापि तुल्यः, इति अधिक्षिप्तवान्, इति प्रोवाच। हरदत्तं गत्वा 'गणदासः त्वाम् उद्दिश्य तस्य तव च समुद्रपल्वलयोरिव अन्तरम् इति परीवादं कृतवान्' इति बभाषे। अनेन उपजापेन संजातसंरम्भौ हरदत्तगणदासौ 'राज्ञः समक्षमेव आवयोः अधरोत्तरव्यक्तिः भविष्यति' इति निश्चित्य राजानम् उपगम्य, देव ! आवयोः परस्परविज्ञानसङ्घर्षे भवानेव नौ विशेषज्ञः प्राश्निकः। तदावां शास्त्रे प्रयोगे च विमृशतु' इत्यूचतुः।

एवं गौतमेन प्ररोपितस्य सुनीतिपादपस्य कुसुमम् उद्भिन्नं दृष्ट्वा नितरां हृष्टः राजा आत्मनः पक्षपातसंभावनया पण्डित-कौशिकीं प्राश्निकपदे प्रतिष्ठाप्य देव्या धारिण्या सहितः 'प्रस्तू-यतां विवादः' इत्याज्ञापयामास। परिव्राजिका तु 'प्रयोगप्रधाने नाट्यशास्त्रे वाग्व्यवहारः मास्तु उपदेशदर्शनेनैव निर्णयः कार्यः' इत्युक्त्वा सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्याभ्यां शिष्याभ्यां छलिताख्या चतुष्पदा शर्मिष्ठायाः कृतिः अभिनीयताम्' इत्यादि-देश। अथ सङ्गीतरचनायां विरचितायां मृदङ्गस्य मध्यमस्वरां मायूरीं मार्जनाम् उपश्रुत्य समुत्सुकाः सर्वे सामाजिकाः ससंभ्रमं प्रेक्षागृहं प्रविविशुः।

हरदत्तगणदासयोः समानेपि ज्ञानवृद्धभावे गणदासस्य वयोधि-कत्वेन पुरस्काराहत्वात् तस्यैव उपदेशः प्रथमं द्रष्टव्यः आसीत्। अतः आचार्येण नियुक्ता मालविका सभाम् आगत्य चतुष्पदां गीतिं यथारसम् अभिनिनाय। प्राश्निकपदम् अधितिष्ठन्ती परिव्राजिका तस्याः अभिनयं दृष्ट्वा यथादर्शनं सर्वम् अनवद्यम् इति नितरां प्रशशंस।

अथ मालविकायाम् आचार्येण सह निष्क्रान्तायां हरदत्तः 'मदीयम् उपदेशम् अवलोकयितुं प्रसादः क्रियताम्' इत्यभ्यर्थितवान्। राजातु मध्याह्नसमयस्य उपस्थितत्वात् 'त्वदीयम् उपदेशं श्वः द्रक्ष्यामः' इति उक्त्वा तं विससर्ज। परेद्युः हरदत्तस्यापि उपदेशं दृष्ट्वा परिव्राजिका मालविकायाः गुणविशेषेण गणदासमेव प्रशंसितवती। यौवने वयसि वर्तमाना मालविका माधवसेनेन पूर्वमेव संकल्पितम् आत्मनः अनुरूपं भर्तारम् अग्निमित्रं दृष्ट्वा तस्मिन् दृढानुरक्ता देव्या धारिण्या तद्दर्शनात् अधिकतरं रक्ष्यमाणा अनुभूतनुक्तेव मालतीमाला नितरां म्लायन्ती अप्रतीकारगुरुकां वेदनाम् अनुभवन्ती आसीत्।

अग्निमित्रोऽपि देव्याः धारिण्याः चित्तं रक्षन् आत्मनः मालविकागतम् अनुरागम् अन्तः निगूह्य पराधीनदर्शनां तामेव अनुध्यायन् अत्यन्तम् उत्कण्ठितः कतिपयं कालम् अयापयत्। अत्रान्तरे देवी धारिणी नववसन्तावतारोत्सवे पुष्पोद्याने राज्ञासह डोलाधिरोहणम् अनुभवितुम् आचकाङ्क्ष।

गौतमस्तदा राजदंपतिभ्याम् अध्यारूढाम् डोलाम् बलवत् आन्दोलयामास। ततः निरवलम्बा धारिणी भूमौ निपत्य सरुजचरणा बभूव। तदानीमेव निपुणिका नाम इरावत्याश्चेटी राजानम् आगत्य प्रणम्य एवं विज्ञापितवती। 'देव! देवी इरावती विज्ञापयति ' अस्मिन् नवे वसन्तोत्सवे आर्यपुत्रेण सह प्रमदवने डोलाधिरोहणम् अनुभवितुम् इच्छामि" इति। दाक्षिण्यपरवशः राजा तत् तथेत्यङ्गीकृत्य गौतमेन सह प्रमदवनं प्रविवेश। समयेऽस्मिन् चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदं कर्तव्यम्

आसीत्। उत्कृष्टाभिजनवत्याः सर्वलक्षणसंपन्नायाः सर्वालंकार-भूषितायाः सुन्दर्याः पादप्रहारेण अशोकः पुष्प्यति इति प्रसिद्धिः। आत्मनः सरुजचरणतया देवी धारिणी दोहदं निर्वर्तयितुं मालविकां योग्येति कृत्वा नियुयोज। प्रतिजज्ञे च 'यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयिष्यति तदा तव अभिलाषपूरयितृकं प्रसादं दास्यामि, इति॥

मदनव्याधिना परामृष्टा मालविका चरणालंकारहस्तया बकुलावलिकाख्यया सख्या सह तदेव प्रमदवनं गत्वा दोहदापेक्षिणः तपनीयाशोकस्य अधस्तात् प्रच्छायशीतले शिलापट्टके निषसाद।

राजा तु गौतमेन सह लतान्तरितो भूत्वा तयोः संलापम् उपश्रृण्वन् आस्त। तदानीम् लब्धावसरा बकुलावलिका राज्ञः अनु-रागम् अधिकृत्य मालविकां विदितार्थाम् अकरोत्। तेन परमानन्द-भरिता मालविका देव्याः धारिण्याः सकाशात् आत्मनः मनोरथस्य प्रतिबन्धम् आशङ्कमाना 'मम दुर्जातसमये साहाय्यम् आचरित-व्यम्' इति बकुलावलिकाम् अभ्यर्थितवती। तथापि तथेत्यङ्गीकृते विरचितपल्लवावतंसा मालविका सलीलम् अशोकपादपाय पादं प्राहिणोत्। तदानीम् पूर्वमेव अभिसंहितं डोलाधिरोहणम् अनुभवितुम् इरावती निपुणिकाख्यया चेट्या सह तदेव प्रमदवनं प्रविश्य प्रियङ्गुलतापरिक्षिप्तं शिलापट्टकम् अध्यास्य मालवि-कायाः दोहदक्रियां निर्वर्णयन्त्यासीत्।

राजा तु तत्र इरावती सांनिध्यम् अजानन् अवसरम् इमम् आसाद्य गौतमेन सह मालविकायाः समीपम् उपसृत्य सरसमधुरैः संलापैः आत्मनः मनोगतम् अनुरागम् निवेदयामास। व्यतिकरमिमं

प्रत्यन्ततः निष्यायन्ती इरावती सरभसम् अन्तःपुरं गत्वा राज्ञः अविनयम् अन्तरेण धारिणीं विदितार्थाम् अकरोत्।

मालविकायाः अभिजनसौन्दर्यशीलादिभिः सद्गुणैः आराधितापि सा, धारिणी, इरावत्याः चित्तं रक्षन्ती निगलितचरणाम् सखीसहितां ताम् अदृष्टसूर्यपादे भूमिगृहे निचिक्षेप।

आदिदेश च तत्र व्यापृतां माधविकाम्। 'न मोक्तव्ये इमे त्वया नागमुद्रासनाथं मम अंगुलीयकम् अदृष्ट्वा' इति परिजनमुखात् एतं वृत्तान्तम् उपलभ्य राजा विशेषतः विषण्णः बभूव।

अथ गौतमः निपुणतरेण उपायेन मालविकां मोचयामास। तथाहि। सरुजचरणा देवी धारिणी कदाचित् प्रवातशयने निषण्णा परिव्राजिकया कथाभिः विनोद्यमाना आसीत्। तदानीम् गौतमः स्वहस्ते केतकीकण्टकैः सर्पस्येव दंशं कृत्वा यज्ञोपवीतेन संवीतांगुष्ठः 'हा! परित्रायताम्, सर्पेण मृत्युना दष्टोऽस्मि' इति देव्याः पुरतः संभ्रान्त इव सरभसं समापत्य निपपात। अवादीच्च। 'देवि! अरिक्तेन पाणिना भवतीं द्रष्टुकामः अहं प्रमदवनं गत्वा अशोकपुष्पग्रहणकारणात् प्रसारिते अग्रहस्ते कोटरनिर्गतेन सर्परूपिणा कालेन दष्टोऽस्मि। सिमसिमायन्ति मे अङ्गानि' इति। कैतवकृतेन अस्य विषवेगाभिनयेन दयार्द्रहृदया धारिणी परिजनावलम्बितम् एनम् विषवैद्यस्य ध्रुवसिद्धेः समीपं प्रापयामास। पूर्वमेव गौतमेन कृतसंकेतः ध्रुवसिद्धिः 'शीघ्रमेव सर्पमुद्रा आनीयताम्' इति संदिदेश। सद्यएव धारिणी सर्पमुद्रासनाथम् अङ्गुलीयकम् आत्मनः अङ्गुल्याः अवमुच्य दत्वा 'पश्चात् ममैव हस्ते देहोतत्' इति प्रतीहारीं प्राहिणोत्।

प्रत्युत्पन्नमतिः गौतमः तत् अङ्गुलीयकम् आदाय माधविकायै दत्वा एवम् अभाषिष्ट—'अद्य राज्ञः नक्षत्रं सोपसर्गम्। तद् कार्तान्तिकादेशेन सर्वबन्धनमोक्षः राज्ञा क्रियते। तत् मुच्यतां मालविका सह सख्या इति देवी धारिणी मन्मुखेन समादिशति' इति। ततः 'युज्यते एतत्' इति कृत्वा माधविका सखीसहितां मालविकां बन्धनात् मोचयामास। गौतमः तां समुद्रगृहे स्थापयित्वा सर्वमिमं वृत्तान्तं राज्ञे निवेदयामास। फलितमनोरथः स राजा सकुतूहलः समुद्रगृहम् आगत्य गौतमं द्वाररक्षकं विधाय शनैश्शनैः सरसमधुरवचनोपन्यासैः मुग्धायाः मालविकायाः संगमसाध्वसम् अपनयन् अभिनवम् अतिरमणीयम् अस्याः मदनविषयावतारम् अनुबभूव।

अत्रान्तरे भर्तुः प्रणिपातलङ्घनजनितम् उपचारातिक्रमदोषं प्रमार्ष्टुकामा चित्रगतं भर्तारं प्रसादयितुम् इरावती निपुणिकया सह तमेव उद्देशम् आजगाम। तदानीम् समुद्रगृहस्य अलिन्दम् अध्यास्य उत्स्वप्नायमानं गौतमम् अभिवीक्ष्य निपुणिका परिहास निमित्तम् भुजङ्गकुटिलं दण्डकाष्ठं तस्यउपरि पातयामास।

स तु सहसा प्रबुध्य 'अब्रह्मण्यम् अब्रह्मण्यम् दर्वीकरो ममोपरि पतितः' इति उच्चैः आचुक्रोश। तत् श्रुत्वा राजा मालविका च सहसा समुद्रगृहात् निर्जग्मतुः। ततः तयोः दिवासंकेतम् उपलभ्य भृशं कुपिता इरावती 'धारिणी पक्षपातम् अवलम्ब्य मालविकां बन्धनात् मोचयामास' इति आशशङ्के।

अथ यदृच्छादृष्टायाः सारभाण्डगृहे नियुक्तायाः माधविकायाः मुखात् 'गौतमोद्भिन्नेन नीतिप्रयोगेण मालविका मोचिता' इति

बुबुधे। मालविकातु 'वृत्तान्तम् इमं श्रुत्वा देवी धारिणी किंवा वदिष्यति' इति विशेषतः वेपमानहृदया बभूव।

अत्रान्तरे मालविकया दत्तदोहदः तपनीयाशोकः अपूर्ण एव पञ्चरात्रे पुष्पितः बभूव। तमिमं वृत्तान्तं प्रमदवनपालिका मधुकरिकादेव्यै धारिण्यै निवेदयामास। सा तु प्रतिश्रुतपूर्वं मालविकायाः राज्ञे प्रदानरूपम् अभिलाषपूरणं निर्वर्तयितुम् आचकांक्ष। ततश्च प्रसाधनकर्मणि अलंकर्मीणाम् परिव्राजिकाम् वैदर्भेन विवाहनेपथ्येन मालविकाम् अलंकर्तुम् अभ्यर्थितवती।

तया सविशेषालंकृतां मालविकाम् आदाय सपरिवारा धारिणी प्रमदवनं गत्वा 'तपनीयाशोकस्य कुसुमशोभां द्रष्टुम् आगन्तव्यम्' इति संदिश्य राज्ञे प्रतीहारीं विससर्ज।

'मालविकायाः पुनर्दर्शनं भविष्यति' इति सकुतूहलः राजा गौतमेन सह प्रमदवनं प्रत्याययौ। अत्रान्तरे यातव्यपक्षे स्थितम् विदर्भनाथं यज्ञसेनम् अभिषेणयितुम् आदिष्टानि वीरसेनप्रमुखानि दण्डचक्राणि तं वशीकृत्य अस्य दायादं माधवसेनं मोचयामासुः। सोऽपि अग्निमित्राय महासाराणि रत्नानि वाहनानि शिल्पदारिका-भूयिष्ठं परिजनञ्च उपायनं प्रेषयामास। तत्रोपायने 'रजनिका' 'ज्योत्स्निका' इति द्वे शिल्पदारिके राजानम् उपस्थातुम् आगते तत्र धारिण्याः समीपे स्थितां मालविकाम् अवलोक्य 'अहो अस्माकं भर्तृदारिका' इति विस्मयाक्षिप्तहृदये तां प्रणेमतुः।

'के भवत्यौ? कावेयम्' इति राज्ञा पृष्टे परिव्राजिका कुमार माधवसेनस्य बन्धनात् प्रभृति सर्वम् उदन्तजातं यथावत् निवेद्य

'सेयं मालविका राज्ञे पूर्वमेव दित्सिता आटविकेभ्यः वीरसेनं, वीरसेनात् देवीम् धारिणीम् गता' इति अवबोधितवती। तत् आकर्ण्य देवी धारिणी 'कष्टम् इयम् अभिजनवती प्रेष्यभावे नियुक्ता' इति नितराम् अनुशुशोच। अग्निमित्रोऽपि दण्डानीकैः स्वायत्तीकृतं विदर्भराज्यं द्विधा विभज्य तत्र यज्ञसेनमाधवसेनौ अवस्थापयामास।

अत्रान्तरे अग्निमित्रस्य जनकः पुष्यमित्रः यज्ञम् अश्वमेधम् आरब्धवान्। तत्र संवत्सरोपावर्तनीयस्य राजपुत्रशतपरिवृतस्य तुरगस्य गोप्तारम् धारिण्याः तनयं कुमारवसुमित्रम् आदिश्य विससर्ज। स च तुरंगः सिन्धोः दक्षिणेतीरे चरन् अश्वानीकेन यवनानां प्रार्थितः बभूव। ततः सेनयोः उभयोः महति संमर्दे धन्वी वसुमित्रः परान् पराजित्य अश्वं प्रत्याजहार। अंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वः पुष्पमित्रः परमानन्दभरितः वृत्तान्तावबोधकं लेखम् अग्निमित्राय प्राहिणोत्। पुत्रविजयवृत्तान्तश्रवणेन नितरां हृष्टः अग्निमित्रः यज्ञसेनस्यालं मुद्गलं विना सर्वान् बन्धनस्थान् मोचयामास।

देवी धारिणी परिव्राजिकायाः अनुमते स्थिता माधवसेनेन प्रथममेव संकल्पितां मालविकां सद्यः समाहृतेन पत्रोर्णेन कृतावकुण्ठनां दत्तदेवीशब्दां 'पुत्रविजयवृत्तान्तश्रवणमहोत्सवेऽस्मिन् अनुरूपं पारितोषिकम् आर्यपुत्रः प्रतीच्छतु' इति राज्ञे प्रतिपादयामास। दाक्षिण्यपरवशः अग्निमित्रः मालविकाम् इरावतीप्रमुखानाम् अन्तःपुराणाम् अनुमते प्रतिगृह्य विहतप्रतिबन्धं तत्समागमसुखम् अनुभूय परां कोटिम् आनन्दस्य अभ्यगच्छत्।

इति

# विक्रमोर्वशीयकथासंग्रहः

अस्ति हिमालये बदरीनामधेयं महर्षिसेवितं पुण्यक्षेत्रम्। तत्र पुरा धर्मसंस्थापनाय भुवमवतीर्णः भगवान् नरसखः नारायणः सुचिरं तपश्चचार। उग्रे तपसि वर्तमानं तं दृष्ट्वा जातशङ्कः महेन्द्रः बह्वीः अप्सरसः तन्नियमविघ्नकारिणीः प्रेषितवान्। ताश्च वसन्तसहायं मन्मथं पुरस्कृत्य बदरीमागत्य भगवन्तं नारायणमृषिं बहुधा प्रलोभयामासुः। तेन कुपितः नारायणः सद्यएव आत्मीयात् ऊरोः स्त्रीरत्नम् एकम् उत्पादयामास। अनिर्वर्णनीयसौन्दर्याम् भगवतः नारायणस्य मुनेः ऊरूद्भवां तां दृष्ट्वा व्रीडिताः सर्वाः अप्सरसः निरस्ताभिमानाः यथागतं जग्मुः।

अथ भगवान् नारायणः ऊरूद्भवतया तां स्त्रियम् ऊर्वशी इत्याहूय महेन्द्रमुपतिष्ठस्व इत्याज्ञाप्य विससर्ज। ततः प्रभृति सा स्वर्गस्य अलंकारभूता तपोविशेषपरिशङ्कितस्य महेन्द्रस्य सुकुमारं प्रहरणं बभूव। तां कदाचित् सखीभिस्समं कैलासनाथम् उपनृत्य निवर्तमानां मध्येमार्गं दृष्ट्वा हिरण्यपुरवासी केशी नाम दानवः चित्रलेखाभिधानया सख्या सह बन्दीग्राहं जग्राह।

तां तथाविधां दृष्ट्वा रंभामेनकाप्रभृतयः अप्सरसः " परित्रायतां परित्रायतां महाभागः; यः अमरपक्षपाती; यस्य वा अम्बरतले गतिरस्ति; इत्याचुक्रुशुः। अत्रान्तरे प्रतिष्ठाननगरम् अधिवसन् पुरूरवाः भगवन्तं भास्करम् उपस्थाय निवृत्तः तमेव उद्देशम् अभ्याजगाम यत्रायमप्सरसां गणः शरणम् आचक्रन्द।

अथ विदितवृत्तान्तः पुरूरवाः ताः अप्सरसः तत्रैव हेमकूट-

शिखरे स्थापयित्वा हिरण्यपुरं प्रति प्रस्थाय महेन्द्रापकारिणं केशिनं वायव्यास्त्रेण लवणाम्बुराशौ प्रक्षिप्य स्वयम् अक्षतशरीरः चित्रलेखाद्वितीयाम् ऊर्वशीं प्रत्यानिनाय ।

अत्रान्तरे महेन्द्रः नारदमुखात् ऊर्वशीं केशिना हृताम् उपलभ्य तत्प्रत्याहरणार्थं चित्ररथेनाधिष्ठितां गन्धर्वसेनां समादिष्टवान् । तेच गन्धर्वाः हिरण्यपुरं प्रति सत्वरम् अभिधावन्तः अर्धमार्गे चारणगणेभ्यः पुरूरवसः जयोदाहरणम् उपश्रुत्य तत्रैव हेमकूटशिखरे द्रष्टुम् उपागताः । अथ पुरूरवाः चित्ररथं विलोक्य 'सखे नायमवसरो मे त्वत्कृतं द्रष्टुम् । तत् त्वमेवैनां प्रभोरन्तिकं प्रापय' इत्युक्त्वा ऊर्वशीं तस्य हस्ते समर्पयामास । सोऽपि तां महेन्द्रस्य समीपं प्रापयामास । तदानीम् ऊर्वशीपुरूरवसोः प्रथमदर्शनसमये अन्योन्यानुरागः अंकुरितः आसीत् । तत आरभ्य तद्गतयैव चिन्तया नितराम् उत्कण्ठितः राजा विदूषकेन समम् आत्मानं विनोदयितुं प्रमदवनं जगाम । तत्र तेन सह ऊर्वशीगतामेव कथां कुर्वन् आस्त ।

अत्रान्तरे ऊर्वश्यपि मदनेन बलवत् बाध्यमाना चित्रलेखया समम् आकाशयानेन तत्राजगाम । आगत्यच तिरस्करिण्या विद्यया प्रच्छन्ना भूत्वा राज्ञः संलापमुपशुश्राव । तत्र आत्मनोप्यभ्यधिकां मदनबाधां दृष्ट्वा ऊर्वशी सद्यएव तिरस्करिणीम् अपनीय राज्ञः पुरतः प्रादुर्बभूव । तां दृष्ट्वा राजनि परमानन्दभरिते सति देवलोकात् दूतः आगत्य ऊर्वशीम् एवम् उवाच । 'भगवान् महेन्द्रः भरतमुनिप्रणीतम् ललिताभिनयम् अप्सरोभिः अभिनीयमानं द्रष्टुम् इच्छति' इति ।

तदाकर्ण्य ऊर्वशी देवेषु अनपराद्धम् आत्मानं कर्तुं महता कृच्छ्रेण राजानम् आमन्त्र्य प्रययौ । अथ देवलोके अप्सरोभिः प्रयुक्तः लक्ष्मीस्वयंवराख्यस्य काव्यबन्धस्य अभिनयः प्रावर्तत । तत्र लक्ष्मीभूमिकया वर्तमाना ऊर्वशी वारुणीभूमिकया मेनकया एवं पृष्टा । "सखि ! समागताः खलु त्रैलोक्येश्वराः सकेशवाः लोकपालाः । तेषु कतमस्मिन् ते भावाभिनिवेशः ?" इति ।

पुरूरवसि अत्यन्तम् अभिनिविष्टभावायाः ऊर्वश्याः मुखात् पुरुषोत्तमे इति भणितव्ये पुरूरवसीति निर्गता वाणी । तेन क्रुद्धो मुनिर्भरतः तामेवं शशाप । "येन मम उपदेशः त्वया लङ्घितः, तेन ते दिव्यस्थानं न भविष्यतीति ।" अथ लज्जावनतमुखी सा महेन्द्रेण भणिता । "यस्मिन् बद्धभावासि, तस्य मे रणसहायस्य राजर्षेः प्रियकारिणी भूत्वा तमेवोपतिष्ठ । यावत् स दृष्टसंतानो भविष्यतीति । तदनन्तरम् ऊर्वशी किञ्चित् विक्लवा अभिसारिकावेषधारिणी चित्रलेखया सह पुरूरवसः प्रासादम् उपससाद ।

तामेव सर्वदा चिन्तयन् राजा तां दृष्ट्वा नितराम् आनन्दभरितः बभूव । अथ ऊर्वश्याम् अत्यासक्तहृदयः पुरूरवाः राज्यकार्याणि अमात्येषु निवेश्य तया सह गन्धमादनं पर्वतं गत्वा तत्र सुचिरं विजहार ।

तत्र कदाचित् मन्दाकिनीपुलिनपर्यन्ते सिकतापर्वतैः क्रीडन्तीम् उदयवतीं नाम विद्याधरदारिकां निध्यातवान् । अतिदूरम् अधिरूढप्रणाया सा ऊर्वशी तत् न सेहे । अथ च बहुशः भर्तुः अनुनयम् अप्रतिपद्यमाना कन्यकाजनपरिहरणीयं कुमारवनं प्रविष्टा ।

पुराकिल भगवान् महासेनः शाश्वतं कुमारव्रतं गृहीत्वा अकलुषं नाम गन्धमादनवनम् अध्यासितवान् । स्त्रीसंसर्गम् अत्यन्तं परिहरन् स भगवान् विधिमेवं कृतवान् । "या स्त्री प्रदेशमिमं प्रविशति, सा लताभावेन परिणमिष्यति गौरीचरण रागसंभवं संगममणिं विना न ततः मोक्ष्यते" इति । विदिताप्येनं गुरुशाप-मूढहृदया सा ऊर्वशी देवतासमयं विस्मृत्य अगृहीतानुनया कुमारवनं प्रविवेश । प्रवेशसमनन्तरमेव वासन्तीलताभावेन परिणतम् अस्याः रूपम् । अलङ्घनीयोहि विधिविभवः । तस्मिन्नेव कानने प्रियतमां विचिन्वन् राजा बहून् अहोरात्रान् अतिवाहयाञ्चक्रे । इतस्ततः पर्यटन् कुत्रचित् शिलाभेदान्तरगतं अग्निस्फुलिङ्गवत् प्रकाशमानं मणिमेकमपश्यत् । तदानीम् अशरीरिणी वाक् एवम् अश्रूयत । "राजन् गृह्यतां गृह्यताम्, गौरीचरणरागसंभवः सङ्गमो नाम मणिरयं धार्यमाणः प्रियजनेन संगमयति ।" इति ।

तदाकर्ण्य राजा भगवतो भवानीपतेराज्ञेयम् इति विज्ञाय 'भगवन्! अनुगृहीतोऽस्मि इति उक्त्वा तं मणिमादाय शिरसि दध्रे । अथच पार्श्वपरिवर्तिनीं मनोहारिणीं वासन्तीलतां दृष्ट्वा कराग्रेण मृदु पस्पर्श । तत्रैव लताभावं विहाय स्वस्वरूपम् आपन्ना ऊर्वशी प्रादुरासीत् । तां दृष्ट्वा प्रमुदितहृदयः पुरूरवाः तया स्मरण-मात्रसंनिधापितेन विमानेन प्रतिष्ठाननगरमवाप ।

एवमूर्वश्या सह देवतारण्येषु सुचिरं विहृत्य प्रतिनिवृत्तः कृतसत्काराभिः प्रकृतिभिः अभिनन्द्यमानः बहून् संवत्सरान् राज्यं शशास । अत्रान्तरे धृतगर्भा ऊर्वशी पुत्रमेकं सुषुवे । "यदा पुरूरवाः पुत्रस्य मुखं द्रक्ष्यति, तदा भवत्या भूयोपि मत्समीपम्

आगन्तव्यम्" इति महेन्द्रस्य नियोगम् अनुस्मृत्य वियोगभीरुः ऊर्वशी जातमात्रमेव पुत्रं राज्ञः अविज्ञातमेव भगवतः च्यवनस्य आश्रमपदे आर्यायाः सत्यवत्याः हस्ते निक्षिप्तवती। स कुमारः यथाकालं भगवता च्यवनेन कृतजातकर्मादिविधानः गृहीतविद्यः धनुर्वेदेचाभिविनीतः पितुः आराधनसमर्थो बभूव। अत्रान्तरे तिथिविशेषे गङ्गायमुनयोः संगमे देवीभिस्सह कृताभिषेकस्य राज्ञः अलंकरणार्थम् अनुलेपनमाल्यादिभिः समम् आनीयमानं संगममणिम् आमिषशङ्की गृध्रः आचिक्षेप। बाणपथमतिक्रान्तं तं निगृहीतुं राजा जालिकान् प्रेषयामास।

अथ दिनान्ते भगवतः च्यवनस्याश्रमे निवासवृक्षे लीयमानं तं गृध्रम् और्वशेयः बाणस्य लक्षीचकार। आश्रमविरुद्धं तस्य तत् चेष्टितं दृष्ट्वा भगवान् च्यवनः सत्यवतीम् आहूयैवमादिदेश। "निर्यापयेममूर्वश्याः हस्तनिक्षेपमिति" सा तं कुमारमादाय प्रतिष्ठानगरमाजगाम। ऊर्वशी तं दृष्ट्वा महेन्द्रस्य नियोगम् अनुस्मृत्य अश्रुपूर्णमुखी रुरोद। राजापि तन्मुखात् पुत्रमुखदर्शनसमनन्तरभाविनम् ऊर्वशीवियोगं विज्ञाय पुत्रे राज्यभारं विन्यस्य अरण्यगमने मतिं चकार। आदिदेशचामात्यपरिषदम् कुमारस्य राज्याभिषेकोत्सवसंभारान् संगृहीतुम्। तस्मिन् समये भगवान् नारदः समाजगाम। तं दृष्ट्वा राजा ससंभ्रमम् आसनात् उत्थाय अर्घ्यपाद्यादिभिः उपचचार।

अथ नारदो राजानम् एवम् उवाच—महाराज भगवान् महेन्द्रः वनगमनाय कृतबुद्धिं भवन्तम् एवम् अनुशास्ति। "त्रैकाल्यवेदिभिः मुनिभिः आदिष्टः सुरासुरविमर्दो भावीति। भवांश्च

मम सांयुगीनः सहायः। तत् त्वया न शस्त्रं न्यसितव्यम्। इयं चोर्वशी यावदायुः तावत् सहधर्मचारिणी भवत्विति।" तदा-कर्ण्योर्वशीपुरूरवसौ महान्तं प्रमोदम् अवापतुः।

अथ भगवान् नारदः देवलोकात् अप्सरोभिः समानीतैः अभिषेकसंभारैः कुमारमायुषं भद्रपीठे उपवेश्य अभ्यषिञ्चत्। अथ ऊर्वशीपुरूरवसौ परस्परम् अवियोगेन कुमारस्यायुषः यौवराज्यश्रियाच परां कोटिमानन्दस्य अध्यगच्छताम्।

इति

# शाकुन्तलकथासंग्रहः

आसीद्विश्वामित्रो नाम महाप्रभावो राजर्षिः। उग्रे तपसि वर्तमानं तं दृष्ट्वा जातशङ्काः देवाः तस्य नियमं विहन्तुं मेनकां प्रेषयामासुः। अपि प्रलोभयितुं प्रस्थितायाः तस्याः साहाय्यकरणाय मन्मथं गन्धवहञ्च प्रचोदयामासुः। ताभ्यां सह प्रस्थिता सा मेनका कौशिकीतीरे ब्रह्मलोकमिव विभ्राजमानं पावनरमणीयं विश्वामित्रस्याश्रमम् आससाद।

तत्र उग्रेण तपसा प्रदीप्तमिव पावकं दुराधर्षं तं दूरादेव दृष्ट्वा अभिवाद्य तस्य पुरतः मधुरमधुरैः चेष्टितैः क्रीडितुम् आरेभे। वसन्तोदार समये तस्याः उन्मादयितृकं रूपं प्रेक्ष्य विश्वामित्रः कामवशं जगाम। ततः तावुभौ तस्मिन्नेव महावने रममाणौ बहूनि वर्षसहस्राणि दिनमेकमिव निन्यतुः। हिमालयस्य अति रमणीयायाम् अधित्यकायाम् सुचिरं रममाणयोः तयोः किमपि कन्यारत्नम् उदपादि।

अथ कदाचित् मेनकासङ्गतः चिरकालार्जितस्य तपसः क्षयम् अनुस्मृत्य क्रुद्धात्मानं विश्वामित्रम् अभिवीक्ष्य साध्वसवेपमानगात्रा मेनका सर्वाभरणभूषितां तां कन्यकां मालिनीतीरे मृदुनि शयने शाययित्वा महेन्द्रमुपस्थातुं प्रययौ। सिंहव्याघ्रनिषेविते गहने वने तया विसृष्टं तं गर्भं शकुन्ताः परिवृत्य ररक्षुः।

अथ दैवात् अनुमालिनीतीरम् आश्रमे वर्तमानः विश्वामित्रस्य प्रियसखः कण्वो नाम महर्षिः स्नानार्थं तत्र आगतः। निर्जने वने शकुन्तैः परिवृतां तां कन्यकां ददर्श। सर्वभूतकृतज्ञः सः भगवान्

शकुन्तानां वाशितैः विश्वामित्रस्य सुतेयम् इति विज्ञाय ताम् आश्रमम् आनीय शरीरसंवर्धनादिभिः दुहितृनिर्विशेषं पुपोष। निर्जने वने शकुन्तैः परिरक्षितेति कृत्वा अस्याः शकुन्तलेति नाम चकार।

ततः क्रमेण अतिक्रान्तशैशवा सा कन्यका रूपयौवनसंपन्ना बभूव। अथ कदाचित् भगवान् कण्वः शकुन्तलाम् अतिथिसत्कार्-राय नियुज्य अस्याः प्रतिकूलं दैवं शमयितुं सोमतीर्थं गतवान्। अत्रान्तरे पौरवो राजा दुष्यन्तः मृगयाप्रसङ्गात् चतुरङ्गं बलम् आदाय वनं जगाम। तत्र व्याघ्रादीन् हिंस्रान् वन्यमृगान् दूरस्थान् सायकैः पातयामास। समीपमागतान् खड्गेन निश्चकर्त। स्वैरं संचरतः गदया निजघान। एवं विविधान् मृगान् सूदयन् तद्वनं निश्श्वापदम् अकरोत्।

अथ संनिहितात् भगवतः कण्वस्य महर्षेः आश्रमात् बहिः स्वै॰ संचरन्तं कृष्णसारम् अनुधावन् उदग्रेण प्लुतेन प्रधावन्तं तं व्यापादयितुं अतिजवेन रथेन अनुपत्य शरासने सायकं संदधे।

तदानीं समिदाहरणाय प्रस्थिताः मुनयः सरभसम् आगत्य 'राजन्! आश्रममृगोऽयं न हन्तव्यः' इति न्यवारयन्। राजापि सद्य एव रथं स्थापयित्वा अवतीर्य तान् प्रणम्य यथोक्तं सायकं प्रतिसंजहार। ते तु राजानम् उचिताभिः आशीर्भिः अभिनन्द्य 'राजन्! एष खलु कण्वस्य कुलपतेः अनुमालिनीतीरम् आश्रमो दृश्यते। तत्र प्रविश्य गृह्यताम् अतिथिसत्कारः' इति उक्त्वा यथो द्दिष्टं साधयामासुः।

पुण्याश्रमदर्शनेन आत्मानं पवित्रीकर्तुकामः दुष्यन्तः रथं

दूरतएव स्थापयित्वा सूतहस्ते धनुराभरणादीनि उपनीय विनीतेन वेषेण तदाश्रमं प्रविवेश। तत्र अनसूयाप्रियंवदाभ्यां सखीभ्यां समम् आश्रमवृक्षान् सिञ्चन्तीम् शकुन्तलां ददर्श। दर्शनमात्रेण तस्याम् अनुरक्तमानसः अपिनामेयं क्षत्रपरिग्रहक्षमा भवेदिति संशयानः तत्वतः एनाम् उपलब्धुम् अवसरं प्रतीक्षमाणस्तस्थौ।

तदानीं सलिलसेचनसंभ्रान्तस्य मधुकरस्य अभिवर्तनेन परित्रस्तां 'सख्यौ परित्रायेथाम्' इत्याक्रन्दन्तीम् शकुन्तलां 'न भेतव्यं न भेतव्यं' इति समाश्वासयन् सरभसम् उपससर्प। शकुन्तलापि राजानं दृष्ट्वा तपोवनविरोधिनः मनोविकारस्य गमनीया संवृत्ता। राजापि सख्योः मुखात् अस्याः अप्सरस्संभवत्वम् भगवतः कण्वस्यापि अस्याः अनुरूपवरप्रदाने एव संकल्पम् अवगत्य लब्धावकाशमनोरथो बभूव। शकुन्तला सरसमधुरैः संलापैः सुचि राजानम् उपास्य सखीभ्यां समम् आश्रमं प्रविवेश। तत्सौन्दर्याकृष्टमानसः दुष्यन्तः तस्याः मनोनिवर्तयितुम् अशक्नुवन् शिबिरम् आसाद्य तामेव अनुध्यायन् आस्त।

तदानीं माढव्योनाम विदूषकः मृगयाशीलस्य राज्ञः तुरगानुधावनेन संक्षुभितसन्धिबन्धः नितरां निर्विण्णः राजानमुपसृत्य विश्रमितुम् एकाहं क्षणं ययाचे। तस्मिन्नेव समये सेनापतिः अरण्यं निगृहीतश्वापदप्रचारं कृत्वा 'मृगयार्थं प्रस्थीयताम्' इति राज्ञे विज्ञापयामास।

शकुन्तलावृत्तान्तेन भग्नोत्साहः राजा मृगयाप्रसङ्गात् निवृत्तमानसः सेनापतिं परिजनञ्च विसृज्य विविक्ते पादपच्छायायां अविरललतावितानसनाथे आसने सुखासीनः शकुन्तलागतं सर्वं

वृत्तान्तं माढव्याय निवेदयामास । अथ भूयोपि शकुन्तलां दिदृक्षुम् 'केनापदेशेन पुनराश्रमपदं प्रविशामि' इति चिन्तयन्तं दुष्यन्तं आश्रमवासिभिः प्रेषितौ ऋषिकुमारकौ समुपसृत्य 'राजन् ! भगवतः कण्वस्य महर्षेः असांनिध्यात् रक्षांसि यज्ञविघ्नम् उत्पादयन्ति । तत् कतिपयरात्रम् आयुष्मतसधोवा भवता सनाथीक्रियताम् आश्रमः' इति प्रार्थितवन्तौ ।

तदानीमेव नगरात् अम्बया प्रेषितः करभकोनाम दूतः समागत्य "देव ! देवी समाज्ञापयति 'आगामिनि चतुर्थे दिवसे निवृत्त पारणः उपवासः मम भविष्यति । तस्मिन् दिवसे दीर्घायुषा अवश्यं संनिहितेन भवितव्यम्' इति" निवेदयामास ।

राजातु कृत्ययोरुभयोः भिन्नदेशत्वेन द्वैधीभूतमानसः तपस्विकार्यस्य अपरिहरणीयताम् आलोच्य, माढव्यम् अम्बायाः पुत्रकृत्यम् अनुष्ठातुं संदिश्य, तपोवनोपरोधिनः सर्वान् आनुयात्रिकान् तेन सह प्रस्थाप्य, 'चपलोयं वटुः कदाचित् अन्तःपुरे शकुन्तलावृत्तान्तं कथयेत्' इति कृत्वा, तं रहसि आहूय, 'सखे ! शकुन्तलावृत्तान्तः न परमार्थः, किन्तु परिहासविजल्पितः' इति उक्त्वा संप्रेष्य स्वयम् आश्रमं प्रविवेश ।

मृत्पिण्डबुद्धिः विदूषकोऽपि तत् तथैवेति मत्वा ययौ । अथ राज्ञः संनिधानेन निरुपप्लवं निर्वृत्तेषु सवनकर्मसु सदस्याः महर्षयः राजानम् आशीर्भिः अभिनन्द्य विससृजुः । अथ शकुन्तलागतया उत्कण्ठया क्लान्तम् आत्मानम् विनोदयितुम् शरणम् अन्यत् अपश्यन् राजा 'लतावलयवत्सु मालिनीतीरेषु तया संनिहितया भवितव्यम्' इति विभाव्य प्रवातसुभगं तमेवोद्देशम् अवाप ।

तत्र वेतसपरिक्षिप्ते लतामण्डपे कुसुमास्तरणशिलापट्टम् अधिशयानाम् सखीभ्याम् अन्वास्यमानां मनोरथप्रियतमाम् अभिवीक्ष्य परमानन्दभरितः विटपान्तरित एव तस्या विस्रम्भकथितानि शृण्वन् आस्त।

अथ राज्ञः प्रथमदर्शनादारभ्य पर्युत्सुकां तन्निमित्तेन आतङ्केन बलवदस्वस्थां शकुन्तलां नलिनीपत्रेण वीजयन्त्यौ सख्यौ 'सखि! बलवान् खलु ते सन्तापः। तदुच्यतां किंनिमित्त एष ते आयासः? इति' पप्रच्छतुः। तत् श्रुत्वा शकुन्तला यदा मम दर्शनपथं गतः स राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेण एतदवस्थास्मि संवृत्ता। यथा तस्य राजर्षेः अनुकंपनीया भवामि तथा वर्तेथाम्। अन्यथा सिञ्चतं मे उदकं' इति विमर्शच्छेदि प्रत्युत्तरं ददौ।

अथ सखीभ्याम् आदिष्टा शकुन्तला ललितपदबन्धनं मदनलेखं विचिन्त्य लेखनसाधनानाम् असंनिहितत्वात् कस्मिंश्चित् शुकोदरसुकुमारे नलिनीपत्रे निक्षिप्तवर्णं कृत्वा सख्योः पुरतः पपाठ। विटपान्तरितः राजा तत् श्रुत्वा सहसोपससर्प। तं दृष्ट्वा सख्यौ कार्यान्तरापदेशेन अन्यत्र जग्मतुः। अथ मुग्धायाः शकुन्तलायाः संगमसाध्वसम् अपनेतुम् कन्याविस्रंभणान् उपचारान् कर्तुम् उपक्रममाणे दुष्यन्ते गौतमी नाम तापसवृद्धा तस्याः शरीरवृत्तान्तोपलंभाय समागता।

तदानीम् दुष्यन्तः सरभसम् अपसृत्य विटपान्तरितो भूत्वा आत्मानम् आवृत्य तस्थौ। गौतमीतु तस्याः शिरसि मन्त्रितदर्भोदिकेन समभ्युक्ष्य 'परिणतोदिवसः' इति कृत्वा ताम् आश्रमं निनाय।

प्रियाविरहेण नितरां निर्विण्णः दुष्यन्तः तया भुक्तोज्झितेषु शय्यादिकेषु आसज्यमानदृष्टिः कथं कथमपि तस्मात् लतामण्डपात् निर्गत्य सायन्तनसवनप्रत्यूहपरिहाराय मुनिभिः आहूतः आश्रमं प्रविवेश ।

अथ परिसमाप्तासु यज्ञक्रियासु ऋषिभिः विसर्जितः राजा स्वनामधेयाङ्कितम् अङ्गुलीयकं शकुन्तलायै दत्वा 'त्रिभिः दिवसैः त्वाम् अन्तःपुरं प्रवेशयितुं सैनिकान् प्रेषयामि ' इति च तस्यै प्रतिश्रुत्य, नगरं प्रतिजगाम ।

अथ कदाचित् दुर्वासाः नाम सुलभकोपो महर्षिः भगवन्तं कण्वं द्रष्टुम् आश्रमम् आजगाम । तदानीम् विविक्ते भर्तृगतया चिन्तया शून्यहृदया वामहस्तोपहितवदना आत्मानमपि अविभावयन्ती आलिखितेव स्थिता शकुन्तला पूजार्हस्य तस्य आतिथ्यं न चक्रे । तेन कुपितः स ऋषिः ' भर्ता त्वां न स्मरिष्यति ' इति शप्त्वा चटुलया गत्या निववृते । अनसूयाप्रियंवदे तत् ज्ञात्वा ससंभ्रमम् उपगम्य तं पादयोः प्रणम्य ' भगवन् अविज्ञातप्रभावस्य दुहितृजनस्य एकोपराधो मर्षितव्यः ' इति प्रार्थितवत्यौ । ऋषिस्तु ' न मे वचनम् अन्यथा भवितुम् अर्हति । किंतु अभिज्ञानाभरणदर्शनेन शापः निवर्तिष्यते ' इति मन्त्रयन्नेव अन्तर्हितः बभूव ।

अथ प्रवासात् प्रतिनिवृत्तः काश्यपः अशरीरिण्या भारत्या दुष्यन्तपरिणीतां शकुन्तलां विज्ञाय ' दैवात् अनुकूलभर्तृगामिनी संवृत्तेति ' नितरां ननन्द । दुर्वासश्शापेन विस्मृतशकुन्तलावृत्तान्ते दुष्यन्ते, काश्यपः ' आपन्नसत्वेयं भर्तुः सकाशं नेतव्या ' इति शार्ङ्गरवमिश्रान् शिष्यान् आज्ञापयामास ।

अथ मङ्गलस्नाता शकुन्तला वनदेवताभिः प्रतिपादितैः दिव्यैः वस्त्राभरणमाल्यैः अलंकृता, नीवाराञ्चतहस्ताभिः स्वस्तिवाचनिकाभिः तापसीभिः अभिनन्द्यमाना दुहितृस्नेहविक्लवेन तातकाश्यपेन कथं कथमपि विसृष्टा संनिहितवनदेवतान् तपोवनतरून् प्रणम्य, भगिनी निर्विशेषाः पुष्पलताः आमन्त्र्य, पुरः प्रस्थितान् शार्ङ्गरवादीन् शिष्यान् गौतम्या समम् अनुजगाम। मध्येमार्गं शक्रावताराभ्यन्तरे शचीतीर्थं वन्दमानायाः शकुन्तलायाः अग्रहस्तात् दुष्यन्तनामाङ्कितम् अङ्गुलीयकं प्रभ्रष्टम् आसीत्। तत् अज्ञात्वा सर्वे ते दुष्यन्तराजधानीं हस्तिनापुरीम् आसेदुः। तत्र कञ्चुकिनिवेदितकण्वशिष्यागमनः दुष्यन्तः तपस्विसंदर्शनयोग्ये अभिनवसंमार्जनसश्रीके संनिहितहोमधेनौ अग्निशरणालिन्दे स्थित्वा तान् प्रतिपालयामास। सोमरातनाम्ना उपाध्यायेन श्रौतेन विधिना सत्कृत्य प्रवेशिताः शार्ङ्गरवादयः राजानम् उपसृत्य तेन अभिवादिताः तम् उचिताभिः आशीर्भिः अभिनन्द्य, एवम् अवोचन्। राजन्! भगवान् काश्यपः कुशलानुयोगपुरस्सरं भवन्तम् इदम् आह।

यन्मिथः समयात् इमां मदीयां दुहितरं भवान् उपायंस्त, तन्मया प्रीतिमता युवयोः अनुज्ञातम्। तदियम् आपन्नसत्वा प्रतिगृह्यतां सहधर्माचरणायेति, दुर्वाससश्शापेन विस्मृततद्वृत्तान्तो राजा तन्नाङ्गीचकार। तदानीम् अभिज्ञानप्रदर्शनेन राजानं प्रत्याययितुं प्रवृत्ता शकुन्तला अङ्गुलीयकशून्याम् अङ्गुलिं दृष्ट्वा नितरां निर्विण्णा बभूव।

अथात्मनः परिग्रहप्रत्यायके सर्वस्मिन् पूर्ववृत्तान्तोपन्यासे विफलीभूते, शापदोषात् व्यवहितस्मृतौ भर्तरि प्रत्यादेशपरुषे

गुरुनिर्देशानुष्ठानेन कृतकृत्येषु प्रतिनिवृत्तेषु शार्ङ्गरवादिषु भीतभीता शकुन्तला प्रवाते कदलीव प्रवेपमाना गत्यन्तरम् अपश्यन्ती 'भगवति ! वसुधे देहि मे विवरम्' इति बाहूत्क्षेपं क्रन्दन्ती तस्मात् प्रदेशात् निर्जगाम ।

तदानीम् अप्सरस्तीर्थे कृतसांनिध्या मेनका दुहितुः दुरवस्थां प्रभावतो विज्ञाय विहायसा आगत्य ताम् आदाय देवर्षेः भगवतः मरीचेः आश्रमे भगवत्याः अदित्याः हस्ते न्यासीचकार । शक्रावतारतीर्थे शकुन्तलायाः हस्तात् प्रभ्रष्टम् रत्नभासुरम् अङ्गुलीयकं मांसपिण्डम् इति मत्वा कश्चित् लोहितमत्स्यो निजगार । तञ्च कश्चित् धीवरः जालोद्धारेण गृहीत्वा तस्य उदराभ्यन्तरे समासादितम् अङ्गुलीयकं विक्रेतुं विपणिं गतः राजपुरुषैः बध्वा राज्ञः समीपं नीतः । दृष्टमात्र एव तस्मिन् दुष्यन्तः सत्यम् ऊढपूर्वा शकुन्तला मोहात् प्रत्यादिष्टा, इत्यनुस्मृत्य मुहूर्तं पर्यश्रुनयनो भूत्वा अङ्गुलीयकमूल्यसंमितम् अर्थं धीवराय पारितोषिकं प्रदाप्य तं निससर्ज ।

अथ पश्चात्तापम् उपगतः दुष्यन्तः चिन्ताजागरणकारणात् धर्मासनम् अध्यासितुम् अशक्नुवन् 'पौरकार्याणि प्रत्यवेक्ष्य पत्रारोपितं कृत्वा प्रदीयताम्' इति अमात्यम् आज्ञाप्य मणिशिलापट्टसनाथे तापच्छेदरमणीये माधवीमण्डपे माढव्येन समम् उपविष्टः चित्रफलके लिखितां शकुन्तलाप्रतिकृतिम् अभिवीक्ष्य अकारणपरित्यागानुशयतप्त हृदयः तामेव अनुस्मृत्य अनुशोचन् आस्त ।

तदानीं देव्याः वसुमत्याः आगमनम् उत्प्रेक्ष्य चित्रफलकं तद्दर्शनात् रक्षितुकामः राजा माढव्यस्य हस्ते तत् समर्प्य तं

मेघप्रतिच्छन्दं नाम प्रासादं प्रति प्रेषयामास। ततो राजानं द्रष्टुं प्रस्थिता वसुमती अमात्यसकाशात् आगतां पत्रहस्तां प्रतीहारीम् अभिवीक्ष्य कार्यज्ञा राज्यकार्योपरोधो मा भूदिति कृत्वा प्रतिनिवृत्ता।

अथ प्रतीहार्या उपनीतायां पत्रिकायां "समुद्रव्यवहारी धनमित्रः नौव्यसनेन विपन्नः अनपत्यश्च तपस्वी। राजगामी तस्यार्थसञ्चयः" इति अमात्येन लिखितम् अनुवाच्य राजा दीर्घं निश्श्वस्य 'एवमेव सन्ततिच्छेदनिरवलम्बानां मूलपुरुषावसाने संपदः परम् उपतिष्ठन्ति। ममाप्यन्ते पूरुवंशश्रियोऽप्येष एव वृत्तान्तः' इति मनसि विचार्य भृशं विमनायमानो मोहम् उपगतः आसन्नवर्तिनीभिः परिचारिकाभिः समाश्वासितो बभूव।

अत्रान्तरे 'कालनेमिप्रसूतं दुर्जयं नाम दानवगणं निहन्तुं दुष्यन्तम् आनय' इति शतक्रतुना आज्ञप्तो मातलिः ऐन्द्रं रथम् आदाय आगत्य तदानीं सार्थवाहवृत्तान्तेन विक्लवं राजानं दृष्ट्वा तं कोपयितुं तिरस्करिणीप्रतिच्छन्नः माढव्यं मेघप्रतिच्छन्दस्य अग्रभूमिम् आरोप्य अवनतशिरोधरं चकार। माढव्यस्य आर्तस्वरम् आकर्ण्य निरस्तवैक्लव्ये राजनि सशरं धनुरादाय समागते मातलिः माढव्यम् उत्सृज्य राज्ञः पुरतः स्थित्वा महेन्द्रस्य नियोगं निवेदयामास।

राजा तु मातलिं स्वागतेन अभिनन्द्य दिवस्पतेः आज्ञां संमानयितुं राज्यभारम् अमात्येषु निक्षिप्य रथम् आरुह्य दिवं ययौ। तत्र दानवान् विजित्य मघवता सबहुमानम् सत्कृत्य विसर्जितः तमेव

ऐन्द्रं रथम् आरुह्य विहायसा प्रस्थितः क्रमेण वायुमण्डलं मेघपदवीञ्च अतिलङ्घ्य हेमकूटं नाम तपसां सिद्धिक्षेत्रं किंपुरुषपर्वतं ददर्श।

'तत्र स्वायंभुवो भगवान् सुरासुरगुरुः मरीचिः प्रजापतिः सपत्नीकः तपस्यति' इति मातलेः मुखात् उपश्रुत्य तं प्रणन्तुं तदाश्रमं प्रविवेश। यत्र मेनकया न्यासीकृता शकुन्तला पूर्णे प्रसवसमये चक्रवर्तिलक्षणसंपन्नं दारकम् एकं प्रसूय राज्ञो विरहव्रतं धारयन्ती वर्तते। दुष्यन्तः कस्मिंश्चित् अशोकवृक्षमूले महर्षिं द्रष्टुम् अवसरं प्रतिपालयन् आस्त। तत्र बलात् आकृष्टेन सिंहशिशुना सह क्रीडन्तम् अबालसत्त्वम् प्रसभदमितसर्वसत्त्वतया "सर्वदमनः" इति ऋषिभिः कृतनामधेयम् शाकुन्तलेयं बालं ददर्श। दुर्मोचहस्तग्रहेण डिम्भलीलया बालमृगेन्द्रं पीडयन्तं दुर्ललितं तं दृष्ट्वा नितरां स्पृहयन् अकस्मात् आविर्भूतेन औरसस्नेहेन आकृष्टहृदयः तं बलात् आकृष्य आलिलिङ्ग।

तदानीम् उभयोः रूपसंवादिनीम् आकृतिम् अभिवीक्ष्य विस्मितानां तापसीनां मुखात् 'शकुन्तलायाः पुत्रोऽयम्' इति विज्ञाय नितरां ननन्द। अथ तापसीभिः तदागमनम् अवबोधिता शकुन्तला सहसा समागत्य पश्चात्तापविवर्णं राजानं दृष्ट्वा बाष्पप्रतिरुद्धेन कण्ठेन 'जयत्वार्यपुत्रः' इति व्याजहार।

अथ राजा शकुन्तलायाः पादयोः पतित्वा 'मर्षयतु भवती मम मनःसंमोहप्रयुक्तं प्रत्यादेशपारुष्यम्' इत्यभ्यर्थितवान्। सा तु आत्मनो दुरवस्थायां पुराकृतं दुष्कृतमेव कारणं मन्यमाना धीवरात्

अङ्गुलीयोपलम्भं तेन परिणयस्मरणादिकं सर्वं वृत्तं राज्ञो मुखात् अश्रौषीत्। अथ राजा सपुत्रां शकुन्तलां पुरस्कृत्य भगवन्तं दाक्षायणीसहितं मरीचिम् उपजगाम। अनुग्रहार्द्रान्तःकरणः स भगवान् स्मृतिवैकल्यकारणं दुर्वासश्शापवृत्तान्तं निवेद्य सपुत्रौ तौ उचिताभिः आशीर्भिः अभिनन्द्य स्वां राजधानीं प्रति प्रस्थापयामास।

इति

# मालतीमाधवकथासंग्रहः

आसीत् विदर्भराजस्य अमात्यः समग्रधुर्यपुरुषप्रकाण्डचक्रचूडामणिः देवरातो नाम । तस्मात् उदयगिरेः बालचन्द्रः इव नयनवतां महोत्सवहेतुः माधवो नाम कुमारः समजनि । अथ तस्य सतीर्थ्यः बालमित्रम् महाराजाधिराजस्य पद्मावतीश्वरस्य मन्त्रिप्रवरः भूरिवसुर्नाम बभूव । सोऽयम् अशेषभुवनमहनीय पुण्यमहिमा देवस्य मकरकेतनस्य सञ्चारिणीं जगद्विजयवैजयन्तिकामिव मालतीं नाम कन्यारत्नम् उपलेभे ।

यदा तयोः भूरिवसुदेवरातयोः विद्यापरिग्रहाय नानादिगन्तवाससाहचर्यम् आसीत् ; तदा प्रवृत्तेयं प्रतिज्ञा । ' अवश्यम् आवाभ्याम् अपत्यसम्बन्धः कर्तव्यः ' इति । तयोरेव मन्त्रिणोः कामन्दकी नाम सौगतसंन्यासिनी सातीर्थ्यात् संजातसौहार्दा बभूव । प्राणव्ययेनापि अनयोः अभिमतं घटयितुम् ईहमाना सा कामन्दकी तत्कुमारयोः मालतीमाधवयोः पाणिग्रहणं निर्वर्तयितुम् उपायं चिन्तयन्ती आसीत् ।

तदानीं राज्ञः पद्मावतीश्वरस्य नर्मसुहृत् नन्दनो नाम नवयौवनेन विभूषिताङ्गीम् मालतीं परिणेतुम् इयेष । राजापि तस्मै तां दातुम् अमात्यभूरिवसुम् अभ्यर्थितवान् । सोऽपि राजकृतायाः दुहितृप्रार्थनायाः साक्षात् प्रतिषेधः कोपाय भवति ' इति मत्वा ' प्रभवति निजस्य कन्यकाजनस्य महाराजः ' इति उत्तरं ददौ । तदेतत् विदित्वा कामन्दकी ' चौर्येण अनयोः विवाहः निर्वर्तनीयः '

इति निश्चित्य अन्योन्यदर्शनम् एनयोः संपादयितुम् अवलोकितां नाम स्वशिष्यां नियुयोज। अत्रान्तरे देवरातः माधवम् आत्मजम् आन्वीक्षकीश्रवणाय कुण्डिनपुरात् पद्मावतीं प्रति प्रजिघाय। तत्र सवयसा मकरन्देन सह विद्याम् अभ्यस्यन्तं माधवम् उपसृत्य अवलोकिता तेन तेन उपन्यासेन भूरिवसुभवनासन्नेन राजमार्गेण सञ्चारयामास। पितुर्भवने वातायनोपविष्टा मालती रथ्यायां भूयो भूयः पर्यटन्तं साक्षात् मन्मथमिव माधवम् अभिवीक्ष्य तस्मिन् अतिमात्रम् अनुरक्ता बभूव।

अथ कस्मिंश्चित् प्रभाते माधवोऽयम् अवलोकितया प्रेरितः प्रवृत्तमदनमहोत्सवम् मन्मथोद्यानम् उपजगाम। तत्र इतस्ततः पर्यटन् परिश्रान्तः कस्यचित् बकुलपादपस्य अधस्तात् उपविश्य तत्र निरन्तरनिपतितानि विकसितानि बकुलकुसुमानि आदाय मनोहरां स्रजम् एकां ग्रथितुम् आरब्धवान्।

पूर्वमेव मन्मथोद्यानमागता रमणीयेन बालनेपथ्येन समलंकृता मालती कुसुमापचयलीलाभिलाषवतीभिः अनुचरीभिः समम् तमेव बकुलपादपोद्देशम् आजगाम। प्रथम दर्शनात् प्रभृति प्रतिदिनम् उपचीयमानया मन्मथव्यथया बाध्यमाना सा मालती माधवस्य चक्षुषोः अमृतवर्तिरिव अनवधिकम् आनन्दम् उत्पादयामास। अयस्कान्तमणिशलाकेव लोहधातुम्, अदसीयम् अन्तःकरणम् उपसंहृतवती सा तत्रैव कंचित् कालं स्थित्वा करेणुकाम् अधिरुह्य, नगरं प्रति प्रतस्थे। तदानीं तस्याः धात्रेयिका लवङ्गिका नाम कुसुमापचयव्याजेन माधवस्य समीपम् उपगम्य तेन ग्रथिताम् अतिमनोहराम् बकुलपुष्पमालाम् आलक्ष्य मालत्याः कृते ताम्

अभ्यर्थितवती। तथा तया अनुबध्यमानः माधवः मालतीमुखा-वलोकनविहस्ततया विषमविरचितैकभागामपि तां मालाम् आत्मनः कण्ठात् अवमुच्य तस्यै दत्तवान्। सापि 'महानयं प्रसादः' इति सबहुमानं प्रतिगृह्य तां मालां मालत्यै समर्पयामास।

तदनन्तरम् अतिभूमिं गतेन मदनजनितेन मनोरागेण क्षाम-क्षामशरीरा मालती मनोविनोदनाय माधवस्य प्रतिच्छन्दकं चित्र-फलके लिखितवती। तच्च चित्रफलकं लवङ्गिका मन्दारिकायाः सख्याः हस्ते समर्पितवती। सा खलु मन्दारिका माधवानुचरस्य कलहंसस्य कामिनी। स कलहंसः प्रतिच्छन्दकम् एतत् मन्दारिका-हस्तात् आदाय आत्मनः प्रभोः माधवस्य दर्शयामास। 'मालत्याः उत्कण्ठाविनोदनम् इदम्' इति कलहंसमुखात् आकर्ण्य परमानन्द-भरितः माधवः तत्रैव चित्रफलके स्वयम् आत्मनो मनोविकारहेतु भूतायाः मालत्याः प्रतिकृतिं विलिलेख। तत् चित्रफलकं माधवात् कलहंसं, कलहंसात् मन्दारिकाम्, मन्दारिकातः लवङ्गिकाम्, लवङ्गिकातः मालतीञ्च प्रतिपेदे।

ततश्च परस्परानुरागदर्शनात् परार्ध्यं प्रेमबन्धम् अधिगम्य प्रमुदितमानसा मालती राजानम् आरिराधयिषोः भूरिवसोः अति-क्रान्तयौवनाय दुर्दर्शनाय नन्दनाय आत्मनः प्रदाने संकल्पम् आकर्ण्य नितरां निर्विण्णा बभूव। 'यदि माधवप्रियवयस्यः मकरन्दः नन्दनस्य भगिनीं मदयन्तिकां समुद्वहति, तदपि माधवस्य प्रियं भवति' इति कृत्वा तयोः विवाहं घटयितुं कामन्दकी बुद्धरक्षितां नाम सखीं नियुयोज। सापि मदयन्तिकायाः प्रियसखी भूत्वा विस्रम्भकथासु 'ईदृशः तादृशः' इति मकरन्दस्योपरि तस्याः

परोक्षानुरागं तथा सुदूरम् आरोपितवती। यथा सा सद्यः एव तं साक्षात् द्रष्टुम् आचकांक्ष।

अथैकदा मालती कृष्णचतुर्दश्याम् देवताराधननिमित्तं स्वहस्तकुसुमापचयम् उद्दिश्य लवङ्गिकया समं शंकरपुरसंबन्धि कुसुमाकरोद्यानम् उपजगाम। तस्मिन्नेव समये कामन्दक्या समादिष्टः माधवः तत्रैव शंकरपुरसंबन्धिनि कुसुमाकरोद्याने कुब्जककुञ्जपर्यन्तरक्ताशोकगहने निलीनः तस्थौ। तत्र पूर्वमेव कृतसंनिधाना कामन्दकी तत्रैव कुब्जककुञ्जे कुसुमापचयार्थम् आगताम् अज्ञातमाधवसंनिधानाम् अन्योन्यदर्शनवशात् अतिमात्रप्रवृद्धेन आत्ममात्रसाक्षिणा अनुरागेण अत्यन्तम् उत्कण्ठिताम् मालतीम् शाकुन्तलादीन् इतिहासान् प्रस्तूय मधुरमधुरैः वचनोपन्यासैः सखीविस्रम्भसेव्यां विधाय, माधवस्य महाकुलप्रसूतत्वादिकान् गुणान् अधिकृत्य विदितार्थाम् अकरोत्।

लवङ्गिकापि 'भगवति! यतः प्रभृति कामदेवोद्याने परस्परदर्शनसुखं समासादितम्; ततः प्रभृति सविशेषदुःसहं दशापरिणामम् अनुभवतीयम्' इति विज्ञाप्य माधवस्य प्रतिच्छन्दकसनाथं चित्रफलकं, तस्यैव स्वहस्तरचितां मालतीकण्ठावलम्बिनीं बकुलमालामपि, कामन्दक्यै प्रदर्शयामास।

रक्ताशोकगहने निलीनः स्थितः माधवः तदेतत् सर्वं कामन्दक्याः आश्चर्यम् आचार्यकम् साक्षात्कृत्य परमानन्दभरितः बभूव। तदानीम् कुत्रचित् मठे लोहपञ्जरे निगलितः कश्चित् शार्दूलः यौवनारम्भभरितेन अमर्षेण बलात् लोहपञ्जरम् उद्घाट्य विगलितनिगलः मठात् अपक्रम्य पलायितुम् आरब्धः। करपत्र-

कठिनदंष्ट्राकरालमुखकन्दरः निशिततरनखरप्रहारनिहतनिखिलजननिवहः कृतान्तलीलायितं कुर्वन् सदुष्टशार्दूलः मकरन्ददर्शनोत्कण्ठया बुद्धरक्षितया सह तमेवोद्देशम् अभिप्रस्थिताम् रथ्यामुखसंगताम् अमात्यनन्दनस्य भगिनीम् मदयन्तिकाम् सपरिजनाम् आसाद्य आस्कन्दितुम् आरेभे ।

यथाशक्ति स्वस्वजीवितपरिरक्षणाय ससंभ्रमप्रधावितानां शंकरपुरवासिजानपदानां कोलाहले प्रवृद्धे, बुद्धरक्षिता सहसा कुसुमाकरोद्यानम् अभिद्रुत्य ‘ परित्रायध्वम् इमां नः प्रियसखीम् मदयन्तिकां अस्मात् दुष्टशार्दूलावस्कन्दात् ’ इति आचक्रन्द । तत् आकर्ण्य माधवः झटिति रक्ताशोकगहनात् निष्क्रम्य मालत्या ‘ अहो ; एषोऽप्यत्रैव ’ इति सहर्षसाध्वसानुरागम् उद्वीक्षितः मदयन्तिकां रिरक्षिषुः सरभसम् अभिदुद्राव ।

अत्रान्तरे मकरन्दः नन्दनाय मालतीप्रदानवार्तां नगरे बहुलीभवन्तीम् उपश्रुत्य माधवस्य चित्तोद्वेगम् अधिकम् आशङ्कमानः सद्य एव तं द्रष्टुम् आकांक्षन् अवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरां मदयन्तिकाम् आलोक्य सरभसम् अभिमुखं प्रधाव्य शार्दूलनिपातितात् कस्माच्चित् पुरुषहस्तात् अधिगतायुधः तम् अवधीत् ।

तत्र शार्दूलनखरप्रहारनिःसृतरुधिरनिष्यन्दः निःसंज्ञः संभ्रान्तया मदयन्तिकया समुपसृत्य गाढम् आलिङ्ग्य अवलम्ब्यमानः कामन्दक्या कमण्डलूदकेन संसिक्तः परिजनैः इतरैः पटाञ्चलैः वीज्यमानः कृच्छ्रेण संज्ञाम् अवाप । पूर्वमेव बुद्धरक्षितोपन्यासेन मकरन्दस्योपरि प्ररूढानुरागा प्रत्यक्षतोऽस्य मुखकमलावलोकनसुखम्

अनुभवितुम् आकांक्षन्ती मदयन्तिका बुद्धरक्षितया कर्णामूलम् आगत्य 'सखि ! स एवायं महाभागः, त्वज्जीवितपरित्राणहेतोः भगवता दैवेन संनिधापितः, इति बोध्यमाना तमेव सस्पृहम् अवलोकयन्ती सुचिरम् अतिष्ठत् । मकरन्दोऽपि चिराकांक्षितं मदयन्तिकायाः अमृतसंवलितैरिवाङ्गैः गाढालिङ्गनम् अनुभूय स्तिमितप्रणयेन तन्नयनव्यापारेण आकृष्टहृदयः तस्याम् अत्यन्तम् उत्कण्ठितः बभूव ।

अत्रान्तरे राज्ञा स्वयमेव प्रतिपादितां मालतीं परिणेतुम् अमात्यनन्दनः तत्परे । मालतीम् आदाय सत्वरम् आगन्तव्यम् इति राज्ञ्या विज्ञापिता कामन्दकी माधवमुखारविन्ददर्शनात् परमं प्रमोदम् अनुभवन्तीम् ताम् कथं कथमपि विनिवर्त्य तया सह नगरीं प्रविवेश । माधवस्तु तेन नितरां निर्विण्णः विफलम् आत्मनो-जन्म मन्यमानः महामांसविक्रयात् अन्यत् उपायान्तरम् अपश्यन् मदयन्तिकायाम् अतिमात्रम् उत्कण्ठितमानसम् मकरन्दं नगरीं प्रति प्रस्थाप्य महाश्मशानं प्रविवेश ।

तत्र कुत्रचित् चण्डिकायतने विविधजीवोपहारप्रिया करालां नाम चामुण्डा आसीत् । अघोरघण्टनामधेयः श्रीपर्वतात् आगतः कश्चित् साधकः तस्याः प्रसादनाय 'स्त्रीरत्नम् उपहारी-करिष्यामि' इति प्रतिजज्ञे । प्रतिज्ञां तां निर्वर्तयितुं पितुर्भवने उपर्यलिन्दं प्रसुप्तां मालतीं मन्त्रशक्त्या समाकृष्य तमेव महाश्मशानप्रदेशम् आनीतवान् । आनीयच कपालकुण्डलाख्यया शिष्यया पूर्वमेव संनिधापितैः संभारैः चण्डिकायाः पूजाविधीन्

परिसमाप्य तस्याः पुरतः स्थापितां कृतवध्यचिह्नां मालतीं हन्तुम् आरब्धवान् ।

अथ प्रबुद्धा सा मालती चिताधूमप्राग्भारद्विगुणितान्धकारायां त्रियामायाम् इतस्ततः प्रवर्तमानकौणपनिकरभीषणं श्मशानवाटम् आलोक्य भीतभीता किमिदम् इति प्रमूढचेतना 'हातात निष्करुण ! एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं जनो विपद्यते । हा अम्ब हतासि दुर्वारेण दैवदुर्विलसितेन । हा मालतीमयजीविते भगवति कामन्दकि ! चिरस्य क्षपितासि दुःखं स्नेहेन । "हा देव माधव ! परलोकगतोऽपि युष्माभिः स्मर्तव्योऽयं जनः" इत्यादिकम् अतिकरुणम् आचक्रन्द । करालायतनात् उच्चरन्तम् परिचितपूर्वम् इमं करुणध्वनिम् आकर्ण्य माधवः कृपाणपाणिः ससंभ्रमं प्रविश्य तयोः पाषण्डचण्डालयोः हस्तगतां मृत्योः मुखे वर्तमानां हरिणीमिव व्याघ्रगृहीताम् चकितचकितं चक्षुः दिक्षु विक्षिपन्तीम् भूरिवसोः सुताम् अद्राक्षीत् । तस्मिन्नेव समये 'अघोरघण्टेनैव मालत्यपहृता भवेत्' इति निश्चित्य कामन्दक्या समादिष्टः भूरिवसोः परिजनः करालायतनं पर्यवष्टब्धवान् ।

माधवोऽपि मालतीं बान्धवेषु संस्थाप्य 'रेरे दुरात्मन् पाषण्डचाण्डाल ! कापालिकापशद ! तिष्ठ तिष्ठ' इत्युक्त्वा द्रुतपदम् उपसृत्य अघोरघण्टहस्तात् झटिति शस्त्रम् आकृष्य तेनैव तम् अवधीत् । तस्मिन् अवसरे निर्दयं निघ्नतीमपि कपालकुण्डलां स्त्री इत्यवज्ञाय विससर्ज । सा तु गुरोः अघोरघण्टस्य विनिपातेन भृशं दुःखिता झटिति तस्मात् प्रदेशात् अपक्रम्य माधवापकारं प्रत्यभिनिविष्टा बभूव ।

अथ कामन्दकी दैवात् अपोढविवाहविघ्नां मालतीं अविघ्न-विवाहमङ्गलाय नगरदेवतागृहम् प्रेषितवती। पूर्वमेव कामन्दक्या कृतसंकेतः मकरन्दसनाथः माधवः तदेव नगरदेवतागर्भगृहं प्रविश्य कुत्रचित् कोणे निलीनः मालत्याः तत्र आगमनं प्रतीक्षमाणः तस्थौ। अथ कामन्दकी ससंभ्रमानेकप्रतिहारमण्डलपरिवृतां बहुल मङ्गलधवलातपत्रविरचितोपचाराम् मनोहरापाण्डुरपरिक्षामदेह-शोभाविभावितानङ्गवेदनां प्रतिपच्चन्द्रलेखामिव प्रेक्षणीयाकाराम् मालतीम् आदाय तत्र आगत्य देवतार्चननिर्वर्तनाय लवङ्गिकामात्र-परिवाराम् ताम् अन्तः प्रवेशयामास।

माधवमुखकमलावलोकनसुखम् अनुभवितुम अतिमात्रम् उत्कण्ठिता मालती तत्र विविक्तं गर्भगृहद्वारम् आसाद्य, अन्तरङ्ग-निर्विशेषया लवङ्गिकया समं यदा विस्रम्भालापान् कुर्वन्त्यासीत् तदा माधवः हृदयानन्दनानि तद्वचनानि आकर्ण्य झटिति बहिरागत्य मालत्याः पुरतः तस्थौ। तदानीं प्रकटितपरस्परप्रेमबन्ध मनोहरैः तत्कालोचितैः आलापैः तौ दंपती परां निर्वृतिम् अवापतुः। अत्रान्तरे कामन्दकी मालतीमाधवयोः पाणिग्रहण-महोत्सवं विधिवत् निर्वर्तयितुं अवलोकितया आत्मनः आवसथे दीर्घिकायाः पश्चात् उद्यानवाटे वैवाहिकानि द्रव्यजातानि सुविहि-तानि कारयित्वा मकरन्दस्य लवङ्गिकायाश्च समक्षं प्रकटितेन परार्ध्येन प्रेमबन्धेन परमं प्रमोदमनुभवन्तौ तौ विवाहमङ्गलाय प्रस्थापयामास।

तदानीम् नन्दनाय मालतीम् दापयितुं कृतनिश्चयः नरेन्द्रः 'नगरदेवतायाः पुरतः मालती अलंकर्तव्या' इति संदिश्य

नानाविधानि विवाहनेपथ्यानि प्रेषितवान्। तान्यादाय कामन्दकी माधवानुचरं मकरन्दम् आहूय 'अनेन वैवाहिकेन मालतीनेपथ्येन आत्मानम् अलंकुरुष्व' इत्यादिश्य अर्पितवती। सोऽपि चित्रयवनिका अन्तर्धाय सर्वाणि नेपथ्यानि दधार। सुश्लिष्टेन मालतीनेपथ्येन विभूषिताङ्गः मकरन्दः सर्वैः सविस्मयं निरीक्ष्यमाणः करिणीम् आरुह्य निखिलैर्मालतीपरिजनैः सार्धं प्रतस्थे।

वैवाहिकेन मालतीवेषेण विराजमानं मकरन्दं दृष्ट्वा 'समागतेयं मालती समभ्यर्च्य नगरदेवताम्' इति सर्वे जनाः संमेनिरे। कृतकमालत्या मकरन्देन सह निर्वर्तितविवाहः नन्दनः महता विभवेन नववधूम् आत्मनो गृहं प्रवेशयामास।

अथ यामिन्यां नववधूसंभोगोत्कण्ठया समुन्मीलितमन्मथावेगः सपादपतनम् अभ्यर्थ्य पुनः बलात्कारेण अभिद्रवन् मकरन्देन निष्ठुरं प्रतिहतः नन्दनः वैलक्ष्यरोषावेशस्खलदक्षरः प्ररुदितनयनः प्रस्फुरद्वदनः 'न मे सांप्रतम् अनया कौमारबन्धक्या प्रयोजनम्' इति सशपथं प्रतिज्ञां कृत्वा वासभवनात् निर्ययौ।

पूर्वमेव मदयन्तिकामकरन्दयोः विवाहं घटयितुं कामन्दक्या नियुक्ता बुद्धरक्षिता तदानीम् 'अयमेव समयो मदयन्तिकां मकरन्देन संयोजयितुम्' इति निश्चित्य मदयन्तिकाम् उपगम्य 'सखि! मालत्या परिकोपितस्ते भ्राता नन्दनः' इतीमं वृत्तान्तं निवेदितवती। सा तु 'वामशीलां मालतीं निर्भर्त्स्य मम भ्रातरं प्रति अनुकूलयिष्यामीति' बुद्धरक्षितया सह प्रस्थाय शय्यागतस्य मकरन्दस्य समीपम् उपजगाम। सोऽपि मदयन्तिकाम् आगच्छन्तीं लवङ्गिकामुखात् आकर्ण्य निभृतम् उत्तरीयापवारितः सुप्तलक्षणः तस्थौ। मदयन्तिका,

'प्रसुप्ता मालतीति' कृत्वा शनैः शयनार्धे उपविश्य बुद्धरक्षितया सार्धं विस्रम्भालापान् कर्तुमारब्धा । तत्र माधवैकमयजीविता मालतीति सार्वजनीनः प्रवादः इति प्रस्तावम् कृत्वा आत्मनोऽपि पूर्वं दुष्टशार्दूलावस्कन्दसमये कृतान्तकवलीक्रियमाणस्य जीवितस्य बलात् प्रत्यानयनेन गुरूपकारिणि महानुभावे मकरन्दे महान्तं मनोनुरागम् उद्घाटयामास ।

तदाकर्ण्य मकरन्दः सहसा मुखम् उद्घाट्य उत्थितः सुस्पष्टम् आवेदितसमागमौत्सुक्यां मदयन्तिकां हस्ते जग्राह । अथ किमिदमिति भयाकुलहृदयां तां बुद्धरक्षिता कामन्दकीनीतिप्रयोगेषु सर्वेषु विदितार्थाम् अकरोत् ।

अथ मकरन्दः सुप्तप्रमत्तजनात् अमात्यवेश्मनः पक्षद्वारेण बहिः निर्गत्य निशीथनिःसंचाररमणीयेन राजमार्गेण मदयन्तिकामादाय मालतीमाधवयोः सकाशम् अभिप्रतस्थे । नगररक्षिभिः पुरुषैः अर्धमार्गे अभियुक्तः तत्कालामन्त्रितेन कलहंसकेन बुद्धरक्षितालवङ्गिकाभ्याञ्च समं मदयन्तिकां माधवस्य सकाशमनुप्रेषितवान् ।

अत्रान्तरे माधवः कामन्दकीनिकेतने दीर्घिकायाः पश्चात् उद्यानवाटे सुविहितेन वैवाहिकद्रव्यजातेन निवर्तितपाणिग्रहणमङ्गलः मालत्या समं निर्वर्तितग्रीष्मदिवसावसानमज्जनः दीर्घिकातीरवर्तिनि शिलातले निषीदन् आस्त । तदानीम् कलहंसकप्रभृतयः सरभसम् अभिद्रुत्य माधवाय मकरन्दस्य नगररक्षिभिः पुरुषैः अभियोगं न्यवेदयन् ।

सोऽपि मदयन्तिकां स्वागतेन अभिनन्द्य प्रियसुहृदः प्रत्यनन्तरी भवितुं कलहंसकेन समं प्रतस्थे। बुद्धरक्षितावलोकिते वृत्तान्तमिमं कामन्दक्यै निवेदयितुं निर्जग्मतुः। लवङ्गिकातु 'लवङ्गिके त्वरितं गत्वा विज्ञापय आर्यपुत्रम्, 'अरिसैन्येषु अप्रमत्तं परिक्रम्यताम्' इति' मालत्याः संदेशम् आदाय माधवस्यैव समीपम् उपजगाम। अथ मालती माधववृत्तान्तपरिज्ञानाय लवङ्गिकायाः प्रतिनिवृत्तिमार्गम् अवलोकितुम् वृक्षगहनम् एकाकिनी प्रविवेश।

अन्तरम् इदम् आसाद्य पूर्वम् अघोरघण्टवधेन संजातकोपा माधवापकारं प्रति अभिनिविष्टचित्ता कपालकुण्डला ससंभ्रमम् आधाव्य 'आः पापे तिष्ठ, तिष्ठ; त्वां श्रीपर्वतम् उपनीय तिलशो निकृत्य दुःखमारिणीं करोमि' इति निर्भर्त्स्य प्रवाते कदलीमिव प्रवेपमानगात्रीं मालतीम् आदाय निष्क्रान्ता। अत्रान्तरे नरेन्द्रः मन्त्रिदुहित्रोः विप्रलम्भवृत्तान्तं श्रुत्वा संजातमत्सरावेगः माधवमकरन्दौ निगृहीतुं प्रौढतरं पदातिबलं प्रेषयामास।

माधवमकरन्दौ तु भीषणभुजबलविमुखीकृतसुभटहस्तावलुप्तैः आयुधैः तत् सैन्यम् उपमथ्य हतावशिष्टान् सैनिकान् पलायितान् अकुरुताम्। तदानीं चन्द्रातपशोभिनि सौधशिखरे स्थितो राजापि ससंभ्रमम् समागतेन प्रतीहारेण कलहंसकेन च निवेद्यमानं माधवमकरन्दयोः अभिजनविनयादिकं गुणगणम् उपश्रुत्य गुणैकरसतया संजातगुरुबहुमानः स्फुरन्मत्सरवैलक्ष्यम्लानितमुखयोः भूरिवसुनन्दनयोः सत्वरं मधुरोपन्यासैः उपाकृत्य नवयौवनगुणाभिरामयोः तयोरुपरि परितोषम् उत्पादयामास।

अथ समरसंकटात् उन्मुक्तौ नववधूदर्शनोत्कण्ठितहृदयौ

माधवमकरन्दौ सत्वरम् उद्यानदीर्घिकातीरम् आगत्य तत्र मालत्यन्वेषणप्रसृतायाः मदयन्तिकायाः मुखात् मालतीं प्रणष्टाम् आकर्ण्य नितरां निर्विण्णौ बभूवतुः।

अत्रान्तरे सौदामिनी नाम कामन्दक्याः पूर्वशिष्या समासादिताश्चर्यमन्त्रसिद्धिप्रभावा कापालिकव्रतं धारयन्ती श्रीपर्वतम् अधिवसन्त्यासीत्। सा च तस्मिन्नेव श्रीपर्वते कपालकुण्डलाहस्तगतां मालतीं दृष्ट्वा कामन्दक्याः प्रसादभूमिरियम् इत्यभिज्ञाय तां कपालकुण्डलाहस्तात् आच्छिद्य आत्मनः आवासभूमिम् आनीय आश्वासयामास। अथ च सा श्रीपर्वतात् पद्मावतीम् उपेत्य 'तत्र असह्यया मालतीविरहवेदनया दूयमानमानसः माधवः संस्तुतप्रदेशदर्शनासहिष्णुः संस्त्यायं परित्यज्य सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारं प्रविष्टः' इत्युपशुश्राव। तमिममुपसांत्वयितुं तत्प्रतीतिहेतोः मालतीकण्ठात् वकुलावलीम् आदाय सत्वरं पद्मसरसः परिसरं प्रययौ।

तत्र दारुणां मालतीविरहवेदनां सोढुमशक्ततया सुचिरम् उन्मादावस्थाम् अनुभूय बहुविलप्य दुरालोकरमणीयानाम् अरण्यतटभूमीनां संदर्शनेन निश्चेतनं माधवम् अभिवोक्ष्य व्याकुलितहृदयः मकरन्दः 'किन खलु माधवास्तमयसाक्षीभवितुं जीवामि, तन्माधवस्य मरणाग्रेसरो भवामि' इति निश्चित्य तं परित्यज्य तत्रत्यात् गिरिशिखरात् पाटलावत्यां सरिति पतितुं प्रायतत।

तदानीम् सा योगिनी सौदामिनी सहसा समागत्य 'वत्स! कृतं साहसेन' इति तं निवारयामास।

अथ मकरन्दमुखात् प्रमुग्धं माधवम् आकर्ण्य तं संभावयितुम्

मकरन्देन सह सत्वरम् उपजगाम। तदानीं दैवानुकूल्येन नवजलधरसमीरणप्रत्यापन्नचेतनः माधवः सौदामिन्याः मुखात् 'मालती जीवती' त्याकर्ण्य प्रहृष्टः बभूव। अथ सौदामिनी वकुलमालादर्शनप्रतीतमानसं मालतीमनुस्मृत्य दूयमानं माधवम् आदाय तपस्तन्त्रमन्त्रयोगाभियोगसमासादितेन विद्याबलेन गगनमार्गम् उत्पतन्ती मालत्याः समीपमानिनाय। अत्रान्तरे भूरिवसुः अधिगतमालतीविपद्वृत्तान्तः ; सांसारिकविषयविरक्त हृदयः वैश्वानर प्रवेशकृतनिश्चयः सुवर्णबिन्दुं नाम शिवालयम् आजगाम।

तदेतत् कस्यचित् वनेचरस्य मुखात् आकर्ण्य सौदामिनी झटिति तत्र संनिधाय मालतीकुशलवार्ताप्रदानेन मरणाव्यवसायात् तं निवर्तयामास। तस्मिन्नेव समये मालत्याः प्रत्यापत्तौ निराशाः प्राणपरित्यागाय गिरिप्रपातात् पतितुम् आरब्धाः कामन्दकी मदयन्तिकालवङ्गिकाः मकरन्दः सहसोपसृत्य सौदामिनीसमागम निवेदनेन सान्त्वयामास।

अथ सर्वे ते कुशलिनौ मालतीमाधवौ दृष्ट्वा प्रमोद निर्भराः बभूवुः। अथच मालतीमाधवयोः मदयन्तिका मकरन्दयोश्च पाणिग्रहणमङ्गलं नन्दनसहितेन राज्ञा पद्मावतीश्वरेण अनुमतमासीत्। माधवमकरन्दावपि अनुरूपानुरागरमणीययोः मालतीमदयन्तिकयोः प्राप्त्या परां निर्वृतिमवापतुः।

तदेवं भूरिवसुदेवरातयोः इतरेतरापत्यसंबन्धनिर्वणरूपं मनोरथं सौदामनीसाहाय्येन संपाद्य कामन्दकी कृतकृत्या बभूव।

इति

# श्रीमहावीरचरितकथासंग्रहः

आसीद्वैवस्वतस्य मनोः महीयसि कुले लब्धजन्मा दशरथो नाम राजा। कोसलेषु अयोध्यां राजधानीम् अधिवसन् वसुन्धरायाम् अनन्यविषयं रक्षाधिकारम् आस्थितः भगवति वैधात्र वसिष्ठे विनिहितकुटुम्बव्यवहारः स महाराजः सुचिरं सुखम् उवास।

अश्रान्तपुण्यकर्मा स राजर्षिः भगवतः विभण्डकसुतस्य महर्षेः ऋश्यशृङ्गस्य वैतानिकैः उपचारैः पुण्यश्लोकान् नयनाभिरामान् रामाद्यान् चतुरः कुमारान् अवाप।

शैशवे वयसि वर्तमानास्ते कुमाराः कृतोपनयनाः दीप्तस्य तेजसः पारं गन्तुकामाः ब्रह्मचर्यम् अचरन्। तस्मिन् अवसरे भगवान् कौशिकः विश्वामित्रः जगतीक्षेमाय भूमौ अवतीर्णस्य रामात्मनः रमावल्लभस्य रक्षोवधाङ्गानि चरितादुभुतानि आस्थापयितुम्, निसर्गसिद्धम् अदसीयं वीर्यम् अत्यद्भुतैः दिव्यास्त्रैः उच्छ्रापयितुम् जगदुपकृतिबीजभूतया जनकात्मजया सह संयोजयितुम्, वसिष्ठपुरोहितस्य राजर्षेः ऐक्ष्वाकस्य गृहान् उपेत्य धनुरनुजसहायं श्रीरामभद्रम् आदाय स्वमेव तपोवनम् प्रत्यागतः।

अथ दीक्षिष्यमाणः विश्वामित्रः प्रियमित्रम् आत्मनः, भगवतः याज्ञवल्क्यात् अधिगतब्रह्मसंहितम् विदेहनाथं निमन्त्रयाञ्चक्रे। समारब्धसप्ततन्तुः साक्षात् आगन्तुम् अपारयन् स वैदेहः कुशध्वजं नाम भ्रातरं प्राहिणोत्। स कुशध्वजः प्रकृष्टकल्याणोदर्कसंगमान् साक्षात्कृतब्रह्मणः महर्षीन् द्रष्टुम् अत्युत्सुकः लाङ्गलोल्लिख्यमानायाः यज्ञभूमेः विनिर्गताम् सीताम् जनकस्य औरसीम् आत्म-

जाम् ऊर्मिलाञ्च आदाय हरितपरिसराररायरमणीयं कौशिकीपरिक्षिप्तं सिद्धाश्रमं नाम प्रथितं कौशिकाश्रमपदम् अभजत। तत्र भस्मलेखालाञ्छितेन भुजान्तरेण रौरवीं त्वचं बिभ्राणौ मौर्व्या मेखलया निबन्धितान्तरीयौ कार्मुकाक्षसूत्रपिप्पलदण्डमण्डितकरौ दशरथदारकौ दृष्ट्वा नितरां ननन्द।

अथ भगवता कौशिकेन यज्ञार्थम् उपनिमन्त्रिताः नानादिगन्तवासिनः मुनीश्वराः पुत्रदारैस्सह समापतन्। तेषु सर्वेषु पश्यत्सु गौतमस्य महर्षेः औचथ्यस्य धर्मपत्नी, शुनासीरावस्कन्दजम् अन्धतामिस्रम् अनुभवन्ती दाशरथेः चरणनलिनरेणुसंस्पर्शमहिम्ना तस्मात् एनसः निर्मुक्ता सती अप्रमेयतेजसम् एनम् अर्घ्याभिः वाग्भिः स्तुत्वा भगवता कौशिकेन अभ्यनुज्ञाता भर्तुरन्तिकं प्रययौ।

विकर्तनकुलकुमारस्य महनीयम् इमम् अनुभावं साक्षात्कृत्य देवयजनोत्पन्ना जानकी तस्मिन् अतिमात्रम् अनुरागम् आबबन्ध। जनकानुजः कुशध्वजोपि रामभद्राय सीताप्रदाने त्र्यम्बकचापारोपणम् अप्रतीकार्यम् अन्तरायम् अमन्यत।

अत्रान्तरे लङ्केश्वरः दशाननः दिव्यसौन्दर्यवतीम् अयोनिजां जानकीम् आकर्ण्य ताम् उपयन्तुम् इयेष। मातामहेन माल्यवता बहुधा प्रतिषिध्यमानोपि दुराग्रहगृहीतहृदयः स दशास्यः ताम् आत्मार्थं वरीतुं सर्वमायं नाम वृद्धराक्षसं प्राहिणोत्। सोपि मिथिलां गत्वा जनकाय दशाननाभ्यर्थनां निवेद्य 'कुशध्वजः कौशिकश्च अत्र विषये प्रमाणम्' इति तेन प्रत्युक्तः सपदि सिद्धाश्रमम् आजगाम। तस्मिन्नेव समये आन्त्रप्रोतबृहत्कपालभूषणभीषणा-

कारा सुकेतुदुहिता सुन्दासुरसुन्दरी ताटका नाम राक्षसी कौशिकोपक्रान्तं क्रतुम् उन्मथितुम् अभ्याययौ ।

महतः ब्राह्मणसमूहस्य उपघातम् उद्वीक्ष्य भगवान् विश्वामित्रः महावीरकुमारं चिबुके स्पृष्ट्वा 'वत्स ! हन्यतामियम्' इति प्रेरयामास । भैरवाकारायाः तस्याः दर्शनेपि अप्रकंपितः दाशरथिः तत्प्रमाथे स्त्रैणेन विचिकित्समानोपि महताम् अभ्युपगमएव पुण्यपापयोः प्रमाणं मन्वानः ताम् उत्पातवातावलीमिव अभिमुखम् आधावन्तीम् हन्मर्मभेदिना कङ्कपत्रेण दृढं प्रहृत्य पातयामास । निखिलनिशिचरकुलनिधनमहायज्ञस्य ओंकारभूतं ताटकाप्रमाथं साक्षात्कृत्य सर्वमायः मनुष्यसकाशात् आशरकुलस्य अधिगतेन अभिनवेन अभिभवेन दन्दह्यमानमानसः जरानिरुद्धगात्रतया प्रतीकारासमर्थः भृशं शुशोच ।

अथ तस्मिन् मङ्गलमये मुहूर्ते भगवान् विश्वामित्रः भृशाश्वात् महर्षेः गुरुचर्याव्रतैः अधिगतानि सरहस्यप्रयोगाणि जृम्भकादीनि दिव्यास्त्रमन्त्रपारायणानि रामभद्राय प्रकाशयामास । दिवौकसोपि पुष्पवर्षैः दुन्दुभिध्वनिभिश्च तमिमं दाशरथेः दिव्यास्त्रलाभम् अन्वमोदन्त । तत्समनन्तरमेव विहायसि विश्वतः प्रदीप्तैः तेजोभिः विस्फुरन्ति प्रज्वलितविद्युत्पुञ्जपिञ्जराणि दिव्यास्त्राणि अभिवन्द्य श्रीरामभद्रः 'ध्यातैः भवद्भिः संनिधातव्यम्' इति संप्रार्थ्य विसर्जयामास । अथ रामभद्रवचनात् अन्तर्हितेषु दिव्यास्त्रेषु महाद्भुतनिधिः गाधिनन्दनः मिथिलेश्वरदुहितुः पाणिग्रहणे चिन्तार्णवमग्नं कुशध्वजम् आहूय खण्डपरशुकोदण्डम् उपस्थापयितुम् आदिदेश ।

शम्भोः वरातिसर्गात् अनुध्यानमात्रोपस्थानदायि तद्धनुर्वरं

कुशध्वजेन सप्रणामम् अनुध्यातम् सद्यएव रामभद्रस्य पुरतः प्रादुर्बभूव। कुशिकतनयप्रेरितेन राघवेण मौर्व्यारोपणाय सलीलम् आदाय आकृष्यमाणं तत्खण्डपरशुकोदण्डप्रकाण्डं प्रचण्डध्वनि-प्रपूरितब्रह्माण्डं मध्ये भग्नमभूत्।

तत् साक्षात्कृत्य सहर्षोन्मादः सीरध्वजानुजः रघुनन्दनम् एह्येहि इत्याहूय दूरप्रसारिताभ्यां भुजाभ्याम् आकृष्य मूर्ध्निउपाघ्राय निर्भरम् आलिलिङ्ग। प्रशमितहृदयशङ्कातङ्केन कुशध्वजेन रामभद्राय उपपन्ना सीता लक्ष्मणभरतशत्रुघ्नेभ्यः दत्ताः ऊर्मिलामाण्डवीश्रुत-कीर्तयश्च विश्वामित्रेण प्रतीष्टाः बभूवुः।

अथ चतसृणां राजसुतानां चतुर्भिः रघुनन्दनैः सह पाणिग्र-हणमङ्गलनिर्वर्तनाय विश्वामित्रः वसिष्ठम् आनेतुं शुनश्शेफना-मानम् अन्यतमं शिष्यम् अयोध्यां प्रति प्राहिणोत्। तदानीं दश-कन्धरनिदेशकरौ सुन्दोपसुन्ददायादौ सुबाहुमारीचौ गाधिनन्दन-समारब्धाध्वरप्रत्यूहाय कृतसंनाहौ अकालपर्जन्याविव भीमाडम्बरौ अम्बरतलम् अगाहताम्। गाधिनन्दनेन तौ निहन्तुम् आदिष्टः विकर्तनकुलकुमारः धरणीधरगुरुमपि तं ताटकातनयं पवनदैव-तेनास्त्रेण तृणवदवधूय सुबाहुमपि निशिततरया क्षुरप्रधारया शकलीचकार।

अथ भगवान् वसिष्ठः शुनश्शेफमुखेनोपनिमन्त्रितः निखिल-परिजनानुयातं दायादसनाथं दशरथम् आदाय महता महर्षिसमूहेन समं प्रस्थाय वैदेहराजधानीम् आजगाम।

तत्र जनकस्य राज्ञः यज्ञसमाप्तौ यथाविधि निर्वर्तितगोदानमङ्गलैः चतुर्भिः विकर्तनकुलकुमारैः परिणीताः सीतायाः चतस्रः ताः

भगिन्यः परमनुरूपभर्तृलाभेन परस्परम् अविप्रवासेनच परमानन्द-भरिताः बभूवुः।

सर्वगायस्तु कुशिककुशध्वजाभ्याम् अनाकर्णितकेन अनादृत प्रार्थनावचनः सद्यः सिद्धाश्रमात् प्रस्थाय लङ्कानगरम् आसाद्य माल्यवते कोसलसुताकुमारस्य कौमारकेलिं कार्त्स्न्येन अकथयत्। तस्मिन्नेव समये भगवान् अगस्त्यः नूतनवधूपरिग्रहसश्रीकस्य जगदभिरामस्य रामस्य मङ्गलागाहारिकं माहेन्द्रं धनुर्वरम् अनुप्रेषितवान्। एवं भुवनेषु अप्रतर्क्यसामर्थ्यानि अस्त्राणि रामे ब्रह्मर्षिभ्यः परिणतानि समाकर्ण्य दशमुखामात्यः माल्यवान् पूर्वमेव पितामहेन वरप्रदान-समये कथितं मानुषेभ्यः भयमप्यनुस्मृत्य महतीं चिन्ताम् उवाह।

अत्रान्तरे भार्गवः जामदग्न्यः भगवतः भवानीपतेः अधिगत-सकलास्त्रविद्यः कोपाग्निम् आत्मीयं संतर्पयितुम् त्रिःसप्तकृत्वः क्षोणीम् अक्षत्रां संनह्य सप्तसमुद्रमुद्रितां तां कश्यपाय मुनये दक्षिणां दत्वा परित्यक्तविषमव्यवसायसाहसः समुद्रम् आस्कन्द्य सुखम् उवास।

महावीरकुमारस्य अपकर्तुम् अभिनिविष्टमानसः माल्यवान् महेन्द्रद्वीपम् आसाद्य माहेश्वरप्रीत्या लंकेश्वरेण सह संजातसौहृदं तं जामदग्न्यम् शम्भवीयस्य शरासनस्य प्रमाथं निवेद्य समुत्तेज-यामास।

अथ माल्यवतः मुखात् धूर्जटिधनुर्द्धंसम् आकर्ण्य रोषपरवशः रैणुकेयः सद्यएव सकलक्षत्रियकुलप्रमापणप्रवीणम्, सहस्रपरि-वत्सरपरिचर्याप्रसन्नेन भगवता पिनाकिना प्रसादीकृतं परशुं वैष्णवं शरासनं चादाय सरभसं मिथिलाम् उपगम्य 'भो भोः परि-

स्कन्दाः क रामः दाशरथिः ' इति अधरितजलधरस्तनितेन वाङ्निर्घोषेण नागरान् विभीषयन् सुदूरविक्षिप्तविकटोरुदण्डनिर्भराघातविह्वलितवसुन्धरः भीतभीतैः प्रतीहारैः अप्रतिहतगतिप्रसरः कन्यान्तःपुरं प्रविवेश ।

तत्र वसिष्ठविश्वामित्रशतानन्दैः दशरथजनकाभ्यांच बहुधा सान्त्व्यमानोपि अप्रतिपन्नप्रशमः परशुधरमुनिः अभिनवविवाहमङ्गलरमणीयवेषेण महावीरकुमारेण पराजितः परित्यक्तशस्त्रग्रहणसाहसः प्रतिपन्नप्रशान्तपावनब्राह्मप्रकृतिः दण्डकारण्यतीर्थोपासकेषु तपोधनेषु कृतापराधान् यातुधानान् प्रध्वंसयितुम् उपयोगं गमिष्यति' इति वैष्णवंधनुः दाशरथये दत्वा तस्मात् अरण्यगमनानुज्ञामादाय यथागतम् अयासीत् ।

अथ गाधिनन्दनः निरन्तरायनिर्वर्तितसमीहितार्थः सिद्धाश्रमं प्रति प्रस्थितः भृगुपतिदमनकुशलं दशरथतनयम् अभिनन्द्य भगवन्तम् अरुन्धतीसहचरम् आतिथ्येन निमन्त्र्य तम् आत्मना समम् अनैषीत् ।

तदानीं लङ्कानगरवास्तव्येन जनकदुहितुः अपहरणम् अधिकृत्य अनिवर्तनीयदुराग्रहगृहीतहृदयेन दशग्रीवेण निरपायम् उपायम् चिन्तयितुम् आदिष्टः मातामहः माल्यवान् रावणावरजां कार्यज्ञां शूर्पणखाम् आहूय एवम् आदिदेश । वत्से ! शूर्पणखे ! राजकार्यं बहु अनुसन्धातव्यम् । तत् आवेद्यमानं श्रूयताम् । सानुचरसुन्दोपसुन्दसुतोपमर्दकः ताटकारिः अस्माभिः समम् आबद्धवैरः सर्वथा प्रतिसमाधेयः वर्तते । तमिमं प्रभुगकैः परिच्याव्य बहुविधैः छद्मप्रयोगैः परिलुप्तोत्साहशक्तिं कृत्वा सुदूरम् आकृष्य रक्षसाम् अन्तिकम्

उपनीतम् विन्ध्यकान्तारेषु अदेशज्ञम् विचरन्तम् अपहृतदारं प्रतिपन्नपौलस्त्यसौहृदेन वालिना घातयिष्यामः।

पूर्वमेवास्माभिः प्रहिताः विराधकबन्धप्रभृतयः यातुधानाः दण्डकारण्यतीर्थेषु स्थलेषु तपोधनेषु तीक्ष्णाः अभिचरन्ति। आगामिकात्मगुणसंपन्नः प्रकृतिभिः अत्यन्तम् अनुरक्तः धर्मात्मा विभीषणः धर्मद्रुहाम् अस्माकम् अभिभवम् उपजनयति। रजनिचराधिराजस्य सहजरिपुरयं केनाप्युपायेन अपसारणीयः। अपसृते तस्मिन् प्रतिपन्नतदेकसौहृदाः खरदूषणत्रिशिरसः राजकुलम् उपजापात् अन्तर्भेदजर्जरं करिष्यन्ति। तत् विभीषणापसारणात् प्रागेव खरप्रमुखाः दाशरथिना घातयितव्याः।

अथ खरादिभिः विनाकृतः समुत्प्रेक्षितविकारः विभीषणः स्वयमेव अपसर्पन् अस्माभिः उपेक्षितः शैशवादारभ्य विरूढसख्यम् ऋश्यमूके स्थितं सुग्रीवम् आश्रयिष्यति। तत्र उपश्लिष्टरामपक्षम् एनं वाली नोपेक्षेत। यासौ राज्ञा दशरथेन प्राक्प्रतिश्रुतवरद्वया राज्ञी भरतमाता कैकेयी; तस्याः मन्थरा नाम परिचारिका दशरथस्य वार्ताहरणाय मिथिलाम् अयोध्यातः संप्रेषिता, मिथिलोपकण्ठे वर्तते' इति संप्रत्येव मे निवेदितं चारकैः। तस्याः त्वया शरीरम् आविश्य सीतालक्ष्मणसहायं रामभद्रम् अविलम्बेनैव दण्डकारण्यं प्रवासय। इति।

अत्रान्तरे प्रकृतिभिः एकायनीभूय प्रार्थितः महाराजदशरथः कुमारस्य रामभद्रस्य अभिषेकमहोत्सवं चिकीर्षुः आभिषेचनिकान् संभारान् संनिधापयितुं सुमंत्रं समादिदेश। तदानीम् आविष्टमन्थराशरीरा शूर्पणखा वसिष्ठविश्वामित्रयोः असांनिध्येन सुममा-

हितमभीहिता सर्वैरभिनन्द्यमानमहिमानं महावीरमुपगम्य कैकय-राजतनूजया प्रेषितं महाराजदशरथेन प्रतिश्रुतपूर्ववरद्वयज्ञापकं कार्यलेखम् अर्पितवती। भरतस्य राज्यप्राप्तिम्, आत्मनः विना-कालहरणं दण्डकाप्रस्थानञ्च, तत्र लिखितम् अनुवाच्य पूर्वमेव यातुधानानां प्रमथनाय दण्डकारण्यं प्रति प्रस्थाने पर्युत्सुकः सीतासहचरः सप्रणामं पितरम् उपगम्य मध्यमाम्बामनोरथपूरणम् अभ्यर्थितवान्।

विशुद्धे राजकुले प्रसूतायाः आर्यप्रकृतेः कैकेय्याः तथाविधे राक्षसकर्मणि चित्रीयमाणचेताः सत्यसन्धः दशरथः निर्भरस्नेह-कातर्येण किंकर्तव्यतामूढं हृदयं कृच्छ्रेण संस्तभ्य कथं कथमपि अरण्यगमनम् अनुमेने। रामभद्रस्योपरि निरवधिकां भक्तिम् अबिभ्रत् भरतः वर्णाश्रमरक्षणे गुरुनियोगम् उल्लङ्घ्य भ्रातुः पाद-परिचरणाय अरण्यानुगमने मतिं व्यधत्त।

रामभद्रः भगवता शरभङ्गेन प्रेषितं तपनीयमयं पादुकायुगलं प्रसादीकृत्य तम् अनुयात्राग्रहात् निवर्त्य मैथिलीलक्ष्मणाभ्या मनुयातः गुरुजनं प्रदक्षिणीकृत्य प्रययौ। राज्यतृष्णापराङ्मुखः भरतः पादुके शिरस्यादाय नन्दिग्रामे जटां बिभ्रत्, सर्वलोकयोग-क्षेमविधानाय राज्याधिदैवतपदे अभिषिच्य स्वयं तदनुचरः भूत्वा पृथिवीं पालयामास। तदानीं रामभद्रप्रवासवैमनस्यम् असह-मानाः सबालवृद्धाः सर्वाः प्रकृतयः सहकुटुम्बैः अरण्यानुगमनाय निर्जग्मुः। दाशरथिः आत्मना तृतीयेन गन्तव्यम् इति अम्बायाः आदेशम् आवेद्य बहुविधैः सान्त्ववचनैः ताः विनिवर्त्य शृङ्गिबेर-पुरवास्तव्येन विहितविशेषोपचारेण निषादपतिना गुहेन सह

सङ्गतः संनिकृष्टप्रयागम् अनुषक्तमन्दाकिनीपवित्रमेखलं महर्षिभिरुप-जुष्टतीर्थम् चित्रकूटाचलम् उपेत्य तत्र विहितसाधुजनावस्कन्दं विराधहतकम् उन्मथ्य संनिहितगृध्रराजं जनस्थानम् अवाप । तत्रैव कश्चित् कालं वसन् 'रामवियोगार्तः दशरथः स्वकर्मणा समापतितं शापम् अनुस्मृत्य शरीरं तत्याज ; इति वार्तामुपश्रुत्य अत्यन्तदुःखितः बभूव ।

ततः कालविप्रकर्षात् मन्दीभूतपितृमरणशोकः शरभङ्गाश्रमं प्राप्य तत्र तस्य तनुहोमम् अधिहव्यवाहम् आहितम् अध्यक्षयित्वा क्रमेण सुतीक्ष्णप्रभृतीनां महर्षीणाम् आश्रमम् अभिगम्य भगवतः कुम्भसंभवस्य वचनात् प्रसन्नसलिलरमणीयां पञ्चवटीं नाम गोदावरीतीरभूमिम् आसाद्य कंचित् कालं सुखम् उवास । पूर्वमेव खरादीन् निहन्तुं चिन्तितापाया शूर्पणखा रमणीयेन सुन्दरीवेषेण रघुनन्दनं धृषस्यन्ती प्राप्ता ; निर्लज्जां निर्मर्यादां तां लक्ष्मणःकर्णनासौष्ठकर्तनेन विरूपाम् अकरोत् । तन्निमित्तकेन वैरेण अभिद्रुतान् खरादीन् यातुधानान् अद्वितीयः दाशरथिः अनायासम् अवधीत् ।

अथ स्वजनविनिपातं सोदर्यायाः स्वसुः निकारं च निशम्य नितराम् अमर्षितः दशग्रीवः मृगरूपधारिणा मायाविना मारीचेन राक्षसेन रामलक्ष्मणौ वञ्चयित्वा सुदूरम् आकृष्य पर्णशालां प्रविश्य जानकीम् अपजहार । हा राम ! हा लक्ष्मण ! इत्याक्रन्दन्तीं जानकीं दृष्ट्वा तत्र संनिहितः गृध्रराजः जटायुः " रे रे नैऋतापशद ! भगवत्पुलस्त्यपौत्रस्य वेदव्रतस्नातस्य विनिर्जितसुरासुरस्य कथ-

भियं ते निन्द्या दुश्चरिता दुर्मतिः संजाता ? इति निर्भर्त्सयन् तम् उपरुध्य निशिततरखड्गप्रहाराभिहतः भूमौ निपपात ।

जनकदुहितृपरिमार्गणप्रसृतः दाशरथिः कण्ठगतप्राणस्य जटायुषः मुखात् रावणापहृतां तां निशम्य सद्यएव संस्थितं वीरलोकम् अधिष्ठितं तं कल्पान्तशकुन्तराजं पितरमिव अग्निसंस्कारादिभिः संस्कृत्य पञ्चवटीं विहाय दक्षिणाभिमुखः प्रययौ । अत्रान्तरे समधिगतखरदूषणमुखनिधनः विभीषणः समुत्प्रेक्षितविकारः राजकुलादपक्रम्य ऋष्यमूके कृतवसतिं सखायं सुग्रीवम् अधिशिश्रिये । परित्यक्तज्ञातिगणः विभीषणः ' धरण्यां धर्मसंस्थापनाय कृतावतरणः कोसलसुता कुमारभावकञ्चुकितकारणाकारः रमारमण एव आत्मनः शरणम् ' इति संदिश्य मतङ्गाश्रमवास्तव्यां श्रमणां नाम धर्मचारिणीं शबरीं रामान्तिकं प्रति प्रजिघाय । साच रामान्वेषिणी प्रसृता योजनदीर्घबाहुना घोररूपेण कबन्धेन राक्षसेन आकृष्यमाणा शरणम् आचक्रन्द । तदाक्रन्दनम् आकर्ण्य लक्ष्मणः सरभसम् अनुधाव्य माल्यवत्प्रयुक्तं दूषितदण्डकारण्यं क्रूराकृतिं कबन्धं खड्गेन निकृत्य निपात्य महति श्वभ्रे प्रभूतैः शुष्ककाष्ठैः चितां परिकल्प्य तच्छरीरं तत्र प्रचिक्षेप । महता तेन चिताग्निना दह्यमानकलेवरः सः सद्य एव संप्राप्तदिव्यदेहः सर्वैः सविस्मयम् अभिवीक्षितः कृतमहोपकाराय दशरथकुमाराय ' माल्यवत्प्रयुक्तः वाली युष्मान् हन्तुम् अभियास्यति ' इति निवेद्य स्वं लोकम् आयासीत् ।

अथ दाशरथिः श्रमणोपदिष्टेन पथा प्रस्थाय प्रशान्तगम्भीरविपुलश्रीः अरण्यभूमीः अतीत्य सुरभिशीतलामलसलिलरमणी-

यान् पम्पातीरसरप्रदेशान् आसाद्य तत्र संगताय विभीषणाय प्रतिश्रुतलङ्काधिराज्यः दर्पात् पर्जन्यमिव गर्जन्तं उत्तुङ्गपिङ्गलाङ्गूलभीषणाङ्गम् पौलस्त्यप्रातिम् अनुस्मार्य माल्यवता प्रयुक्तं युद्धाय संनद्धम् संक्रन्दननन्दनं वालिनं निशिततरशरनिपातेन निहत्य तदनुरोधात् सहस्रांशुसूनुना सुग्रीवेण समं सख्यं वैश्वानरसाक्षिकं विधाय तमेनं किष्किन्धाराज्ये अभ्यषेचयत्।

अथ सुग्रीवभुजबलपरिपालितेषु अप्रमेयेषु कपिबलेषु मैथिलीमन्वेष्टुम् अनुदिशम् अभिप्रस्थितेषु प्रभञ्जनात्मजः हनूमान् अपार पारावारपरिखापरिवृतं लङ्कानगरम् आसाद्य तत्र राक्षसीभिः परिवृतया सीतया सह सुचिरं संभाष्य केशबन्धात् उन्मुच्य तया समर्पितं चूडामणिम् अभिज्ञानम् आदाय नगरं तत् अग्निसात्कृत्य गाढप्रहारविक्षिप्तविविधराक्षसलोकः अक्षकुमारेण अनुबध्यमानः तस्मिन् कृतान्तलीलां कृत्वा झटिति निष्क्रम्य दाशरथ्योः पार्श्वम् आजगाम।

अथ विकर्तनकुलकुमारः महावीरः प्रस्थाय महतीं वानरसेनाम् आकर्षन् आशाविषविषमैः इषुभिः विशोषितवारिपूरेण सरित्सलिलात् समुद्गम्य सागरात्तनम् अभ्यर्थ्य समुपदिष्टमार्गः वलीमुखसहस्रानीतैः महीधरशिखरैः विनिर्मितेन सेतुना गोष्पदवत् अनायासातिलङ्घितपाथोनाथः सुवेलमहीधरमस्तकविन्यस्तस्कन्धावारभरः लङ्काप्राङ्गणम् अध्यासामास।

तदानीम् अङ्गदः लङ्कां गत्वा दशकण्ठमेवमुवाच—"भो रावण! सकलक्रव्यादसमुदायदावानलस्य देवस्य दाशरथेः दूतोऽहम् अङ्गदः भवन्तम् अनुशासितुम् आगतोऽस्मि। अशेषनिशाचर-

कुलकालरात्रिं सीतां सद्यएव रामाय निर्यातय। भजस्व सावरोधसुहृद्दायादसमुदायः सौमित्रेः चरणौ। नोचेत् आशीविषविषवेगविषमाः तदीयाः इषवः तव दुर्मदं व्यपनेष्यन्ति ' इति।"
'अहो मर्कटस्यापि वाचाटता ' इति दशास्येन सहासम् अवधोरितः सः वालिसूनुः ' नचिरादेव क्रकचक्रूरनखशिखरनिकृत्तैः तव उत्तमाङ्गैः दिग्भ्यः बलिम् उपहरामि ' इति उच्चैः उद्घुष्य झटिति उत्प्लुत्य श्रीरामभद्रस्य अन्तिकम् उपजगाम।

अथ क्षुधान्धाः प्लवङ्गाधिपाः दिशिदिशि विक्षिप्तैः अतिस्थूलैः गण्डोपलैः लङ्कानगरगोपुराणि बिभिदुः। तेन कर्मणा पदा स्पृष्टः पन्नग इव क्रुद्धः दशकन्धरः संवर्तसमयसमुज्जृम्भितसमसमुद्र भीषणनिर्घोषैः परस्सहस्रसंख्याकैः राक्षसव्यूहैः अनुयातः युयुत्सया नगर्याः निर्ययौ। तदानीम् परस्परं मुष्टीमुष्टि कचाकचि प्रहार प्रमूढचेतनम्' कठोरतरप्रासप्रहारपातितप्रवीरशरीरनिर्यातबुक्कासहस्रनिरन्तरनासीरप्रदेशम्, निरन्तरनिपतितकबन्ध कदम्ब जिघत्सासमायातगृध्रयूथपतत्रनिवारितदिवाकरकिरणम् दुर्धरमिथः प्रहारनिर्भिन्नकलेवरनिष्ठ्यूतरुधिरप्रवाहदुःसंचरसरणीकमपास्तक्रमप्रवीरप्रचारप्रतिभयं प्लवगयातुधानानां महत् प्रधनं प्रारब्धम्।

अथ वैनतेयास्त्रप्रयोग विश्लिष्टमेघनादास्त्रबन्धनः दाशरथिः अकाले बोधितं प्रियस्वप्नम् अखर्वगर्वम् कुम्भकर्णम् निशिततरैः शरनिकरैः कणशः आच्छिद्य गृध्राणां व्यभजत्। अत्यद्भुतदिव्यास्त्र प्रयोगनिपातितमेघनादः लक्ष्मणोऽपि रावणेन वक्षसि शक्त्या ताडितः

प्रमूढचेतनः प्रभञ्जनतनयसमानीतमहौषधिमहिमावधूतदुःव्यथः क्षणात् पुनरुत्तस्थौ । अथायम् अनुजात्मजवधव्यसनमहार्णवे संभ्रान्तः प्रस्फुरद्भुजमदः क्रोधान्धः क्रव्यादचक्रवर्ती महावीरप्रयुक्त-ब्रह्मास्त्रच्छिन्नशिरःपङ्क्तिः धरातले निपपात । त्रिभुवनशत्रोः दशकन्धरस्य निधनमहोत्सवं प्रत्यक्षीकृत्य प्रमोदनिर्भराः प्रनृत्यन्तः पीयूषाशनाः दाशरथेः मूर्ध्नि कल्पद्रुमप्रसूतानि प्रसूनानि ववृषुः ।

अथ दशमुखनिकेतननिवासकौलीनशङ्कापनुत्तये कृतपावक-प्रवेशनिर्गतया साक्षात् समागतेन सकलसुरगणपरिवृतेन संक्रन्द-नेन समभिनन्दितपातिव्रत्या सीतया समेतः श्रीरामभद्रः कारा-गृहेभ्यः विमोचिताभिः वृन्दारकवन्दीभिः अभिष्टुतचरितः सीताविशुध्यनुमोदनार्थम् अवतीर्णैः अप्सरोगणैः वैमानिकैश्च समारब्धाभिः मङ्गलतूर्यरवमिश्राभिः गीतिभिः निष्पादिताभिषेक-कल्याणेन विभीषणेन समुपस्थापितं पुष्पकं विमानम् अधिरुह्य सुहृत्समूहपरिवृतः रघुकुलराजधानीम् अयोध्यां प्रति प्रतस्थे ।

क्रमेण दिगन्तरालसमाहृतधरणिधरशिखरनिकरनिर्मापितसेतु-पथसीमन्तितं समुद्रम्, लोपामुद्रापरिष्कृतपरिसररमणीयं कौम्भसंभवम् आश्रमम्, पूगवननिविडरमणीयानि कावेरीतीर-तलानि, खरदूषणमुखनिशिचरनिधनस्थानं जनस्थानम्, इत्येतान् अन्यांश्च प्रदेशान् अतिजवेन पुष्पकेन अतिक्रम्य प्रभञ्जनतनय-सकाशात् प्रवृत्तिम् उपलभ्य प्रमोदनिर्भरेण भरतेन प्रत्युद्यातः भगवता मैत्रावरुणिना प्रागेव संनिधापितसकलाभिषेकसंभाराम् अयोध्याम् आससाद ।

तत्र सर्वान् बन्धून् सोपचारं संभाव्य तत्कालसंनिहितेन वात्सल्यपरतन्त्रेण विश्वामित्रेण अरुन्धतीसहचरेण वसिष्ठेन अन्यैश्च महर्षिभिः रत्नमये पीठे स तया सह समुपवेशितः सुगन्धिभिः तीर्थसलिलैः अभिषेचितः परां कोटिमानन्दस्याध्यगच्छत् ।

इति

श्रीः

# उत्तररामचरितकथासंग्रहः

पुरा खलु उद्दीर्णेन रावणेन उपप्लुतैः देवैः अभ्यर्थितः भगवान् श्रियःपतिः अयोध्यायां कोसलसुताकुमारभावेन अवतीर्य पौलस्त्य-वधं व्याजीकृत्य शरणागतसंरक्षणरूपं परमधर्मं अवनीतले प्रवर्तयामास ।

अथ सकलं राक्षसकुलं विजित्य चिरविरहपर्युत्सुकया सीतया-देव्या सर्वैः सुहृद्भिश्च समेतः पुष्पकं विमानमारुह्य अयोध्यां प्रत्यागत्य वसिष्ठभरतशत्रुघ्नादिभिः ससंभ्रममुपरचितसंविधानं अभिषेक-महोत्सवं अन्वभूत् । तत्र लङ्कासमरसुहृदः सर्वान् वानरान् राक्ष-सांश्च यथोचितं संमान्य स्वगृहान्प्रति प्रेषयामास । नानादिगन्तेभ्यः समागतान् ब्रह्मर्षीन् राजर्षींश्च स विशेषं संभाव्य विससर्ज । मिथि-लेश्वरो जनकोपि बहून् दिवसान् उत्सवेन नीत्वा अनुष्ठाननित्यत्वेन अपकृष्टस्वातन्त्र्यः आपन्नसत्त्वामपि दुहितरमामन्त्र्य मिथिलां प्रति-प्रययौ ।

अथ रघुपतौ कुलक्रमागतम् अयोध्याराज्यं निर्बाधं परिपाल-यति सति भगवान् शान्तापतिः ऋश्यशृङ्गः द्वादशवार्षिकं सत्र-मारेभे । तदनुरोधात् सर्वाः राममातरः कठोरगर्भां जानकीं, तद्विनोदनार्थं रामभद्रं च अयोध्यायां स्थापयित्वा भगवन्तम् अरुन्ध-तीजानिं पुरस्कृत्य ऋश्यशृङ्गाश्रमं ययुः । कतिपयदिवसापगमा-नन्तरमष्टावक्रो नाम महर्षिः भगवत्याः अरुन्धत्याः राममातॄणां भगवतो वसिष्ठस्य च संदेशमादाय रामभद्रं एवमबोधयत् । "भग-

वती अरुन्धती, जनन्यश्च त्वां पवमादिशन्ति । 'वत्सायाः जानक्याः यदि गर्भदोहदो भवति सः अवश्यम् अचिरात् माननीयः' इति ।

भगवान् वसिष्ठस्त्वेवमाह । ' अचिराधिष्ठितं राज्यं छिद्र बाहुल्यात् दुनिरीक्ष्यम् । सर्वथा प्रजानामनुरञ्जने युक्तो भव' इति ।"
अथ कदाचित् लक्ष्मणः जनकस्य वियोगेन दुर्मनायमानां सीतां विनोदयितुम् अर्जुनं नाम चित्रकरमाहूय " आर्यस्य श्रीरामभद्रस्य चरितम् कस्यांचित् वीथिकायां विलिख " इत्याज्ञप्तवान् । सोऽपि यथाज्ञप्तं भगवत्याः वैदेह्याः हुताशनविशुद्धिपर्यन्तं विलिलेख । तत् आलेख्यगतमात्मीयं चरितं लक्ष्मणेन प्रदर्श्यमानं रामभद्रः सीतया सहितः ददर्श । तत्र भगवता विश्वामित्रेण प्रसादीकृतानि जृम्भकास्त्राणि, मिथिलावृत्तान्तः, नूतनदारपरिग्रहाणां चतुर्णां भ्रातॄणां अयोध्याप्राप्तिः, कैकेयीवृत्तान्तः, गुहसमागमः जनस्थान-वृत्तान्तः, माल्यवति पर्वते वर्षासमयः, वानरराक्षसानां अपरिमितानि उत्तरोत्तराणि कर्माश्चर्याणि, इत्येतानि अपदानानि वर्तमानानीव पश्यन् सीतया सह रामभद्रः नितरां ननन्द । एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदा जानकी पुनरपि प्रसन्न-शिशिरसलिलायाम् भागीरथ्यामवगाहनं, प्रशान्तगम्भीरासु वनराजिषु विहरणं च, अनुभवितुमाचकाङ्क्ष । अचिरेणैव-संपादनीयः दोहदः इति गुरुभ्यः श्रुतवान् रामभद्रः तत् तथेत्यभ्यु-पगम्य अस्खलितसंपातं रथम् उपस्थापयेति लक्ष्मणमादिदेश ।

रथम् आनेतुं प्रयाते लक्ष्मणे, परिश्रमजनितया निद्रया अपहृत-चेतना जानकी वातायनोपकण्ठे रामबाहुमुपधानीकृत्य संविश्य

सुष्वाप। अत्रान्तरे पौरजानपदेषु अपसर्पतया प्रहितः दुर्मुखोनाम शुद्धान्तचारी समागत्य रामभद्रमेवम् व्यजिज्ञपत्। "देव! देव्याः वैदेह्याः रक्षोगृहवासप्रयुक्तं दूषणं जनाः कथयन्ति। अग्निशुद्धिं तु दूरवृत्तां न विश्वसन्ति" इति।

कश्मलामिमां किं वदन्तीं श्रुत्वा लोकाराधनतत्परः रामः सुभृशाभितप्तहृदयः दुर्मुखमेवमाबभाषे "दुर्मुख! लक्ष्मणमेवम् मद्वचनाद्ब्रूहि। "संप्रत्येव गुरुभिः उपदिष्टम्। अस्याः गर्भदोहदः अचिरात् संपादनीयः" इति। "प्रजानामनुरञ्जने सावधानेन भवितव्यम्" इति च। "तत् इमां सापवादां दोहदसंपादनव्याजेन वनं प्रापय्य विसर्जय" इति। तथेति दुर्मुखे निष्क्रान्ते लवणेन असुरेण उपप्लुताः यमुनातीरवासिनः महर्षयः रामभद्रं त्रातारमभिजग्मुः। तत् विदित्वा लवणस्य उन्मूलनाय शत्रुघ्नं प्रेषयामास।

अथ सीतया उपधानीकृतं बाहुं शनैः आकृष्य समुत्थाय सीतामसह्यायां विसृज्य दुःखदुःखेन निर्जगाम। अथ लक्ष्मणः सुप्तोत्थितां सं तां रथमारोप्य वनं प्रापय्य बाष्पगद्गदकण्ठः रुदन्नेव भ्रातुः आज्ञां निवेद्य शोकातिरेकजनितया मूर्च्छया भूमौ पतितां चिरात् लब्धसंज्ञां बाहुयुगलमुत्क्षिप्य क्रन्दमानामुदश्रुः भगवतः वाल्मीकेः तपोवनोपकण्ठे विसृज्य निववृते। अथ तथाविधम् अवस्थान्तरम् आपन्ना सा सीतादेवी प्राप्तप्रसववेदनम् आत्मानम् अतिदुःखसंवेगात् गङ्गाप्रवाहे निक्षिप्तवती। तस्मिन्नेव समये अन्तर्जलं दारकद्वयं प्रसूता सा भगवतीभ्यां पृथ्वीभागीरथीभ्याम् उत्सङ्गितैकैकदारकाभ्याम् अभ्युपपद्य रसातलं नीता। स्तन्यत्यागात् परेण भगवती

भागीरथी दारकयोः क्षत्रियोचितानि कर्माणि कर्तुम् भगवन्तं वाल्मीकिम् अभ्यर्थयामास। स च भगवान् वाल्मीकिः तौ कुमारौ सादरम् आदाय धात्रीनिर्विशेषं परिपोषयन् निवृत्तचौलकर्मणोः तयोः त्रयीवर्जम् इतरासु विद्यासु निष्ठाम् अवापयामास। समनन्तरम् एकादशे वर्षे क्षात्रेण कल्पेन उपनीय त्रयीविद्यामपि अध्यापितवान्।

अथ एकदा स्नानार्थम् तमसातीरम् अनुप्राप्तः भगवान् प्राचेतसः तत्र द्वन्द्वचारिणोः क्रौञ्चयोः एकं व्याधेन विध्यमानम् अपश्यत्। तद्दर्शनेन नितराम् खिन्नमानसस्य तस्य वदनात् आकस्मिकप्रत्यवभासा आनुष्टुभेन छन्दसा परिच्छिन्ना वाग्देवी निर्जगाम।

मानिषाद प्रतिष्ठां त्वम्

अगमः शाश्वतीः समाः।

यत् क्रौञ्चमिथुनादेकम्

अवधीः काममोहितम्॥ इति

अथानेन विचित्रेण सरस्वतीविलासेन विस्मितान्तरङ्गः भगवान् वाल्मीकिः अभिषेककर्म निर्वर्त्य आत्मनः पर्णशालाम् अवाप्य तमेव यदृच्छया अवतीर्णम् आनुष्टुभं श्लोकं मनसा पुनःपुनः आवर्तयन् आस्त।

ततश्च भगवान् भूतभावनः पद्मयोनिः साक्षात् आविर्भूय, 'ऋषे! प्रबुद्धासि वागात्मनि ब्रह्मणि; तद्ब्रूहि रामचरितम्; प्रकाशाप्रकाशानि सर्वाणि रामचरितानि अव्याहतज्योतिषि प्रतिभाचक्षुषि ते प्रतिभास्यन्ति' इत्युक्त्वा अन्तर्दधे। वाल्मीकिरपि यथोपदिष्टम् प्रागग्रेषु दर्भेषु उपविश्य, समाधिदृष्ट्या

सर्वलोकैकवीरस्य रामभद्रस्य हसितभाषितादीनि सर्वाणि चेष्टितानि परिज्ञाय, श्रीरामायणाख्यम् आदिकाव्यम् प्रणिनाय। तच्च काव्यम् तौ किंनरस्वनौ कुमारौ कुशलवौ अध्यापयामास। तौच मेधाविनौ कुमारौ तपोवनवासिनाम् ऋषीणां समीपे काव्यम् इदं मधुरेण स्वरेण अगायताम्। गान्धर्वविद्यातत्त्ववेदिभ्याम् ताभ्यामुपगीयमानम् तत् श्रुत्वा सर्वे मुनयः चिरनिवृत्तमपि रामभद्रस्य चरितम् प्रत्यक्षमिव पश्यन्तः परां प्रीतिम् अवापुः। अथ भगवान् वाल्मीकिः स्वकृतेः रामायणस्य रसवत्तरं संदर्भान्तरम् अभिनयार्हम् स्वहस्तलिखितं कृत्वा तत्प्रयोगाय तौर्यत्रिकसूत्रधारस्य भरतस्य मुनेः सकाशं शिष्यहस्तेन प्रेषितवान्। तेषां प्रमादोच्छेदनार्थम् ज्येष्ठं सीताकुमारं कुशम् चापपाणिम् आनुयात्रिकं विससर्ज। अथ कुमारयोः कुशलवयोः द्वादशस्य संवत्सरस्य पूर्तौ, भगवती भागीरथी जनकात्मजाम् एवम् उवाच। "वत्से! आयुष्मतोः कुशलवयोः आयुरारोग्याभिवृद्धये भवत्याः पुराणश्वशुरम् मानवस्य राजर्षि-वंशस्य प्रसवितारम् देवं सवितारम् स्वहस्तापचितैः पुष्पैः उपतिष्ठस्व"। तदर्थम् अवनिपृष्ठवर्तिनीम् भवतीम् अस्मत्प्रभावात् वनदेवताः अपि न द्रक्ष्यन्ति। किंपुनर्मर्त्याः। त्वयि प्रकृष्टप्रेमा तमसा तव प्रत्यनन्तरी भविष्यति" इति।

अथ यथादिष्टम् जानकी दारुणेन दीर्घशोकेन क्लपितं क्षामक्षामं शरीरम् उद्वहन्ती, सशरीरा विरहवेदनेव गोदावरीह्रदात् निश्चक्राम। अत्रान्तरे भगवान् ऋष्यशृङ्गः द्वादशवार्षिकं सत्रं परिसमाप्य, सर्वान् अभ्यागतान् संपूज्य विसर्जयामास। अरुन्धतीवसिष्ठौ राममातरश्च 'अयोध्यायाम् अलीकपौरापवादोद्विग्नः रामभद्रः

आसन्नप्रसववेदनाम् सीतादेवीम् एकाकिनीम् अरण्ये परितत्याज ' इति उपश्रुत्य, ' नवयं वैदेहीविरहिताम् अयोध्यां प्रवेक्ष्यामः ' इति निश्चित्य, वाल्मीकेः तपोवनम् उपजग्मुः ।

अथ रामभद्रः हिरण्मयीम् सीताप्रतिकृतिम् सहधर्मचारिणीम् विधाय, अश्वमेधं क्रतुम् उपक्रम्य, वसिष्ठशिष्येण वामदेवेन अनुमन्त्रितम् मेध्याश्वं विसृज्य, तद्रक्षणाय चतुरङ्गबलसमन्वितम् अवाप्तदिव्यास्त्रसंप्रदायम्, लक्ष्मणात्मजं चन्द्रकेतुं प्रेषितवान् । अथ एकदा कोऽपि ब्राह्मणः मृतं पुत्रम् उत्सङ्गे आदाय, राजद्वारि सोरस्ताडनम् अब्रह्मण्यम् उद्घोषितवान् । ततः राजापचारमन्तरेण न प्रजानाम् अकालमृत्युः भवति इति आत्मनः दोषं निरूपयति करुणामये रामभद्रे, सहसैव अशरीरिणी वाक् एवम् आविरभूत् ।

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।

शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ इति ।

तत् उपश्रुत्य जगत्पतिः रामभद्रः कृपाणपाणिः चिन्तितोपस्थितं विमानम् आरुह्य, सर्वाः दिशः विदिशश्च चरितुम् आरब्धवान् । अथ दण्डकायां जनस्थाने तं शम्बूकं धूमपम् अधोमुखं तपस्यन्तम् समासाद्य, कृपाणेन तच्छिरः छित्वा, ब्राह्मणपुत्रं संजीवयामास । संप्राप्तदिव्यदेहः शम्बूकः श्रीरामभद्रं शिरसा प्रणम्य, बह्वीभिः भूतार्थव्याहाररूपाभिः स्तुतिभिः उपश्लोक्य, पुराणब्रह्मर्षिम् भगवन्तम् अगस्त्यम् उपसृत्य अभिवाद्य, सद्यः समुपस्थितं विमानम् आरुह्य, स्वं लोकम् अवाप । रामभद्रोऽपि, परिचितपूर्वान् प्रशान्तपावनगम्भीरान् वैदेहीसहवासविस्रम्भसाक्षिणः दण्डकारण्यभूमिभागान् अभिवीक्ष्य, नितरां पर्याकुलहृदयः इतस्ततः परिबभ्राम ।

शोकमात्रद्वितीयोऽयं रामभद्रः नानाविश्रविहारसाक्षिणः गोदावरी-तीरकाननप्रदेशान् आसाद्य, सीतानुस्मरणेन नितरां पर्याकुलहृदयः 'हा सीते! हा दण्डकारण्यवासप्रियसखि! हा विदेहराजपुत्रि! इत्यादि विलपन् शोकातिरेकेण द्रवीभूतहृदयः मूर्च्छया अपहृतचेतनः छिन्नमूलः तरुरिव भूमौ निपपात। दैवात् तत्समीपवर्तिनी तमसा-द्वितीया भागीरथीप्रसादेन वनदेवतानामपि अदृश्या जानकी जलभरभरितमेघस्तनितगम्भीरम् अदसायं भारतीनिर्घोषम् आकर्ण्य शङ्कितहृदया ससम्भ्रमम् उपसृत्य, हरिचन्दनपल्लवकल्पेन स्नेहार्द्र शीतलेन पाणिना श्रीरामभद्रं मृदु पस्पर्श। हृदि प्रसिक्तेन संजीव-नौषधिरसेनेव सकलेन्द्रियसंतर्पणेन तत्करस्पर्शेन संज्ञां प्रतिपद्य, श्रीरामभद्रः चक्षुः उन्मील्य सर्वतः विलोकयामास।

अथ सर्वतः शून्यम् अरण्यम् अभिवीक्ष्य 'अहो! किमिदम् आश्चर्यम्? निष्करुणः निर्भरगर्भखिन्नाम् सीतां विवासयन् अहम् अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः। सकलेन्द्रियसंमोहनोऽयं स्पर्शः परिचितपूर्वः इव प्रतिभाति, तत् कुतः इदानीम् प्रियतमास्प-र्शहेतुभूतं भागधेयम्? इत्यादि बहुधा विकल्पयन् आस्त। अथ सीतादेव्याः प्रियसखी वासन्ती नाम वनदेवता, परिचिततत्तत्प्रि-यवस्तुसंदर्शनात् सञ्जातम् अन्तःकरणावेगम् अन्तःनियन्तुम् अपारयन्तं रामभद्रं बहुधा सान्त्वयामास। तमसाद्वितीया सीतापि तयोः वासन्तीरामभद्रयोः परस्परसंवादम् अलक्षितैव श्रुत्वा कुमारयोः कुशलवयोः वर्षवर्धनमङ्गलानि निर्वर्तयितुम् भागीरथीतीरं जगाम। अतिगम्भीरस्य शोका-वेगस्य प्रतीकारम् अन्यम् अपश्यन् रामभद्रः 'अश्वमेधसहधर्मचारिणीम्

हिरण्मयीम् सीताप्रतिकृतिं दृष्ट्वा बाष्पदिग्धं चक्षुः विनो-
दयिष्यामि, इति वासन्तीम् आमन्त्र्य विमानराजम् आरुह्य तस्थे ।
सीतादेव्याः तादृशं दैवदुर्विपाकम् उपश्रुत्य सञ्जातवैराग्यः चन्द्र-
द्वीपतपोवने पराकसान्तपनभूतानि तपांसि तप्यमानः पुराण-
राजर्षिः जनकोऽपि तस्मिन्नेव समये चिरन्तनप्रियसुहृदं प्राचेतसं
द्रष्टुम् अभ्याजगाम । अनेकसंवत्सरातिक्रमेऽपि तिक्ष्णपरिभावनया
त्यग्रमिव स्पष्टनिर्भासं दारुणं दुःखसंवेगम् अनुभवतः वैदेहस्य
तत्र कौसल्यादर्शनम् क्षते क्षारोत्सेचनमिव असह्यवेदनम् अभूत् ।
तथैव सीतागतया चिन्तया कृशीभूतदेहाम् अन्यामिव उपलक्ष्य-
माणाम् कौसल्याम् जनकदर्शन सञ्जातः शोकातिरेकः मूर्छिताम्
अकरोत् ।

अत्रान्तरे वाल्मीकिशिष्याः सर्वे बटवः मिलित्वा शिष्टा-
नध्यायमहोत्सवं खेलनेन संभावयन्तः कोलाहलम् अकुर्वन् ।
तेषां मध्ये विहरन्तम्, नीलोत्पलश्यामलेन उज्ज्वलेन देहबन्धेन
गम्भीरेण स्वरेण च रामभद्रस्य अनुहरमाणम्, कनीयांसं सीता-
कुमारं, लवं दृष्ट्वा, सर्वे सीताबान्धवः तं स्वसमीपम् आनाययां-
मासुः । आनाय्य च 'तव मातापितरौ ब्रूहि' इति पप्रच्छुः ।
सतु 'नाहं स्मरामि मातरं पितरंवा ; भगवतः वाल्मीकेः शिष्योऽह
मितितु जानामि' इति त्युवाच । अस्मिन् समये लक्ष्मणात्मजः
चन्द्रकेतुः आश्वमेधिकस्य अश्वस्य संरक्षणप्रसङ्गेण सुमन्त्रसा-
रथिम् रथम् आरुह्य ससैन्यः वाल्मीकेः तपोवनम् आजगाम
कौतूहलाकुलहृदयैः तपोवनबटुभिः 'कस्यायम् अश्वः ?' इति पृष्टे
सर्वलोकैकवीरस्य असहायशूरस्य पौलस्त्यकुल धूमकेतोः महाराज

रामभद्रस्य इति सैनिकैः अवाचि। तमेनम् अश्वानुयात्रिकाणां श्रीरामभद्रप्रतापाविष्करणम् वीरवादम् अमृष्यमाणः लवः सर्वैः तपोवनवटुभिः सहितः तम् अश्वम् लोष्टैः अभिहत्य परावर्तयितुम् आरेभे। अपूर्वारण्यदर्शनकुतूहलाक्षिप्तहृदयः चन्द्रकेतुः आश्वमेधिकस्य अश्वस्य कदनम् अभिवीक्ष्य, धनुष्पाणिः तान् वटून् निर्भर्त्सयामास। दुर्दान्तः लवोऽपि कार्मुकम् आदाय युद्धाय सन्नद्धः बभूव। पदातिः असहायः लवः सर्वैः सैनिकैः समेत्य पर्यवरुध्यः स्वतः प्रत्यवभासं जृम्भकास्त्रं मनसा सस्मार। तेन च सर्वान् सैनिकान् संस्तम्भयामास।

अथ कुमारयोः तयोः विचित्रैः दिव्यास्त्रप्रयोगैः अनिर्णयजयापजये द्वन्द्वयुद्धे प्रवर्तमाने, शम्बूकवधात् प्रतिनिवृत्तः रामभद्रः मध्येमार्गम् कुमारचन्द्रकेतुम् अभियुज्यमानम् अभिवीक्ष्य युद्धभूमौ कुमारयोः मध्ये विमानम् अवतारयामास। तद्दर्शनमात्रेणैव विनीतः चन्द्रकेतुः संप्रहारात् विरम्य तम् अभिवादयामास। पुण्यानुभावदर्शनस्य महापुरुषस्य अस्य दर्शनेन सञ्जातविनयः लवः तदानीमेव भरताश्रमात् प्रतिनिवृत्तः कुशश्च तं रामायणकथापुरुषं रामभद्रं विज्ञाय सविनयम् उपसृत्य 'भगवतः प्राचेतसस्य अन्तेवासिनौ कुशलवौ आवाम् अभिवादयावहे' इति स्वनामोच्चारणपूर्वकम् अभिवादयामासतुः।

अथ कठोरकमलगर्भकोमलेन शरीरेण माङ्गल्यमृदङ्गमांसलेन कण्ठध्वनिना प्रसन्नसंहसितमितेन वीक्षितेन सर्वात्मना आत्मसंवादिना आकृतिविशेषेणाच विराजमानौ तौ कुमारौ दृष्ट्वा आकस्मिकेन तारामैत्रकेण आबद्धचक्षुः श्रीरामभद्रः अतिमात्रवात्सल्यद्रवीभूत-

हृदयः सरभसं प्रसारिताभ्याम् बाहुभ्याम् तौ कुमारौ आकृष्य निर्भरम् आलिलिङ्ग। अथ तत्र पूर्वमेव ऋष्यशृङ्गाश्रमात् समागतैः कौसल्या प्रभृतिभिः जननीजनैः अरुन्धतीवसिष्ठाभ्याम् जनकेन च समम् उपसंगम्य, ताभ्यां कुमाराभ्याम् उपगीयमानम् भगवतः वाल्मीकेः सरस्वतीनिष्यन्दम् रामायणं शुश्राव। तौ कुमारौ आपन्नसत्वायाः सीतायाः विवासनपर्यन्तम् कथाभागं चिरनिवृत्तमपि वर्तमानमिव अनुभूयमानं मधुरमधुरेण वाङ्मयेन प्रदर्श्य, उपरितनं सीतावृत्तान्तं प्रकाशयितुं भगवान् वाल्मीकिरेव प्रमाणम्" इति उक्त्वा विरेमतुः।

अथ श्रीरामभद्रः मनसि एवं विचारयामास। नूनम् एताभ्यां कुमाराभ्यां सीतागर्भसंभवाभ्यां भवितव्यम्। इदं हि प्राचेतसाध्युषितम् अरण्यम्, यत्र सा देवी परित्यक्ता; इयं चानयोः भूयिष्ठम् अस्मत्संवादिनी आकृतिः; अनयोः स्वतः प्रकाशानि जृम्भकास्त्राणि; ममच अपरिचितयोरपि एनयोः उपरि निरतिशयः चक्षूरागः, इत्येतत् सर्वं मदीयामेव संभावनाम् उपोद्बलयति। किं करोमि? कं पृच्छामि? इति।

इत्थं विचिन्तयति श्रीरामभद्रे, भगवान् भूतार्थवादी प्राचेतसः समागत्य रामभद्रम् एवम् उवाच। यदिदम् अस्माभिः आर्षेण चक्षुषा समुद्वीक्ष्य पावनं करुणाद्भुतरसं किञ्चित् उपनिबद्धम्, तच्च अभिनयार्हम् अप्सरोभिः भगवान् भरतः प्रयोजयिष्यति; तदर्थम् भागीरथीतीरम् उपगम्य, समाजसंनिवेशः कर्तव्यः; सर्वैश्च पौरजानपदाः लक्ष्मणेन सह तत्र संनिधापयितव्याः; इति, रामभद्रश्च वाल्मीकिगौरवात् सद्य एव अयोध्यातः लक्ष्मणम् आहूय सर्वाणि संविधानानि सविशेषम् अकारयत्। सदेवासुरतिर्य-

गुरगनायकाः मर्त्यामर्त्याः सर्वे भूतग्रामाः वाल्मीकिना प्रभावेण संनिधापिताः रसभरभरितं तं प्रयोगं प्रेक्षितुं सकुतूहलाः समाजग्मुः।

कुशलवावपि श्रीरामभद्रस्य नियोगम् अनुसृत्य लक्ष्मणेन चन्द्रकेतुसदृशीम् स्थानप्रतिपत्तिम् लम्भितौ प्रेक्षकौ अभूताम्। तत्र प्रथमं सूत्रधारः प्रविश्य 'भगवतः वाल्मीकेः सरस्वतीनिष्यन्दस्य रामायणस्य करुणाद्भुतमयः रसवत्तरः संदर्भः प्रयोक्ष्यते; तत्र कार्यगौरवात् भवद्भिः अवधातव्यम्' इति प्रस्तावनाम् अकरोत्। अथ महावने लक्ष्मणेन परित्यक्ताम् आसन्नप्रसववेदनाम् श्वापदैः अभिलष्यमाणशरीराम् अशरणाम् भागीरथ्याम् आत्मानं निक्षिप्तवतीम् तत्रैव दारकद्वयं प्रसूताम् सीताम् अवलम्ब्य पृथ्वीभागीरथीदेव्यौ एकैकं दारकम् उत्सङ्गे कृत्वा प्रविश्य ताम् एवम् आश्वासयामासतुः।

समाश्वसिहि कल्याणि
दिष्ट्या वैदेहि वर्धसे।
अन्तर्जलं प्रसूतासि
रघुवंशधरौ सुतौ॥

सीता तत् श्रुत्वा 'दिष्ट्या दारकौ प्रसूता अस्मि, हा आर्यपुत्र! इति उक्त्वा मूर्छिता बभूव। अथ प्रतिपन्नसंज्ञाम् तथाविधम् अवस्थान्तरम् आपन्नाम् सीतां दृष्ट्वा देवी विश्वंभरा निर्भरम् आलिङ्ग्य मूर्छिता बभूव। सापि भागीरथ्या समाश्वासिता एवम् आह—देवि! सीतां प्रसूय कथम् आश्वसिमि। केवलम् असदृशं कर्म अनुष्ठितं रामभद्रेण।

न प्रमाणीकृतः पाणिः
बाल्ये बालेन पीडितः ।
नाहं न जनको नाग्निः
नानुवृत्तिर्न संततिः ॥ इति ॥

तां च भागीरथी एवं प्रत्युवाच च "प्रसीद भगवति वसुन्धरे । किम् असंविदानेव संसारस्य जामात्रे कुप्यसि ! कुलधनमिदम् इक्ष्वाकूणाम्, यत् सर्वो लोकः सर्वात्मना समाराधनीयः । तत् किं करोतु मे वत्सो रामभद्रः" इति । अथ नेपथ्ये कलकल शब्द संमिश्रम् अन्तरिक्षम् विद्युदुद्योतितमिव जज्वाल । तद्विज्ञाय पृथ्वी भागीरथ्यौ एवम् अब्रूताम् । 'पूर्वम् अयोध्यायाम् आपन्नसत्वां सीतां विनोदयितुं लक्ष्मणः रामभद्रचरितानि आलेख्ये लेखयामास । तद्दर्शनसमये भगवतः विश्वामित्रस्य प्रसादेन प्रादुर्भूतानि जृम्भकास्त्राणि अभिवीक्ष्य रामभद्रः सीताम् एवम् उवाच 'सर्वथा इमानि अस्त्राणि त्वत्सूतिम् उपस्थास्यन्ति' इति । तथैव तानि संति कुमारौ उपस्थातुं प्रादुर्भूतानि' इति ।

अथ सीता 'कः एतयोः क्षत्रियोचितानि कर्माणि करिष्यति ?' इति चिन्ताम् आपेदे । भगवती भागीरथी ताम् एवम् आश्वासितवती । 'वत्से ! किं तव अनया चिन्तया ? एतौहि वत्सौ स्तन्यत्यागात् परेण भगवतः वाल्मीकेः अर्पयिष्यामि, स एव एनयोः क्षत्रकृत्यानि करिष्यति' इति, अथ सीता मातरम् एवम् अभ्यर्थयामास ॥ नयतु माम् आत्मनोऽङ्गेषु विलयम् अम्बा । न सहेऽहम् ईदृशं परिभवम् अनुभवितुम् इति । पृथ्वीतु 'वत्से ! स्तन्यत्यागं यावत् मन्नियोगतः पुत्रौ अवेक्षस्व । परेणतु यथा रोचते तथा

करिष्यसि इति। एवं सम्यक् अभिनीतं कथावस्तु अभिवीक्ष्य रामलक्ष्मणौ यदा 'जन्मसिद्धजृम्भकास्त्रौ अवाप्तवाल्मीकि शिष्यभावौ श्रीरामभद्रतुल्याकारौ द्वादशवयः परिमाणौ कुशलवौ नूनं सीतागर्भसंभवावेव' इति उत्प्रेक्षेते, तदा पृथ्वी भागीरथी सीताः झटिति निश्चक्रमुः। समाप्तश्च अन्तर्नाटिकाभिनयः।

अथ रामः 'कथं विलय एव वैदेह्याः संपन्नः; हा देवि! दण्डकारण्यवासप्रियसखि! हा! चारित्रदेवते। लोकान्तरं पर्यवसितासि' इत्युक्त्वा मूर्छितः भूमौ निपपात। लक्ष्मणः 'हा किमिदम् अत्याहितम्' भगवन् वाल्मीके! परित्रायस्व परित्रायस्व आर्यं रामभद्रम् इति उच्चैः आचक्रन्द। अथ वाल्मीकिना अनुज्ञाता भगवती अरुन्धती गङ्गापृथिवीभ्यां समर्पितां सीताम् आदाय सत्वरं रामभद्रस्य सकाशं नीत्वा 'वत्से! तव पाणिना स्पृष्ट्वा रामभद्रं संजीवय' इत्युवाच। तया तथैव कृते समाश्वस्तः रामः सानन्दं 'भोः किमेतत्?' इति वदन् चक्षुरुन्मीलयामास।

अथ अरुन्धती एवम् उच्चैः आबभाषे। भो भोः पौरजानपदाः! इयम् अधुना भगवतीभ्यां जाह्नवीवसुन्धराभ्याम् प्रशस्य मह्यं समर्पिता पूर्वञ्च भगवता वैश्वानरेण निर्णीतपुण्यचरित्रा ब्रह्मादिभिश्च देवैः स्तुता देवयजनसंभवा जानकी परिगृह्यते; कथं भवन्तः मन्यन्ते? इति। एवम् अरुन्धत्या निर्भर्त्सिताः सर्वाः प्रजाः सीतां नमश्चक्रुः। लोकपालाः देवर्षयश्च पुष्पवृष्टिभिः उपतस्थिरे। अथ अरुन्धती सीतां पाणिना गृहीत्वा रामभद्रम् उपसृत्य 'जगत्पते! रामभद्र!

नियोजय यथाधर्मम् ।
प्रियां त्वं धर्मचारिणीम् ॥
हिरण्मय्याः प्रतिकृतेः ।
पुण्यप्रकृतिमध्वरे ॥

इति आज्ञापयामास । तदानीमेव वाल्मीकिः कुशलवौ आनाय्य समुपसृत्य ' वत्सौ कुशलवौ ! एषः रघुपतिः पिता युवयोः ; लक्ष्मणः कनिष्ठतातः, सीताच जननी, अयञ्च राजर्षिः जनकः मातामहः ' इत्युक्त्वा रामाय अर्पयामास । सीतारामभद्रौ, कुशलवौ गाढम् आलिङ्ग्य निर्भरानन्दौ, सुचिरम् आनन्दशीतलम् बाष्पं मुमुचतुः । तदानीमेव उत्खातलवणः मधुरेश्वरः समाजगाम । अथ श्रीरामभद्रः सानुषङ्गाभिः कल्याणपरंपराभिः उपासितः परां कोटिम् आनन्दस्य अभ्यगच्छत् ।

इति

# NOTES

### Page 1

तीक्ष्णधिषणाः—acute, shrewd.
पर्यणैषीत्—married.
निमन्त्रयांचक्रे—invited.
मांसपेशी—a ball of flesh or egg.

### Page 2

विनिस्सस्रुः—came out.
सुषुमाम्—exquisite beauty.
विरतिम् उपेयुषि—when died.
अप्रतीकाराम्—remediless.
सर्वात्ययम्—destruction of all.

### Page 3

विद्राव्यमाणम्—driven away, liquefied.
तद्याथातथ्यम्—its real nature.
मधूच्छिष्टमयं—made of bee's wax.
वैरप्रतियातनावसरम्—time to revenge.

### Page 4

अग्र्यम् आसनम्—first seat.
साटोपम्—arrogantly.
क्षपणक—a Jaina mendicant.
विस्रम्भः—confidence.
न्यरूणत्—besieged.

### Page 5

सुरङ्गाद्वारेण—through subterranean passage.

दित्सितं—intended to give.
सांवत्सरिक—astrologer.

Page 6

गजवशा—a female elephant.
निषादी—the elephant driver.
असिपुत्रिका—a knife.
लोहकीलक—a lance.

Page 7

पिपीलिकापङ्क्ति—a row of ants.
अभियोक्तुम्—to attack.
प्रचक्रमे—began.
कपटतन्त्राणि—fraudulent contrivances.

Page 8

प्रणिधिः—spy.
उपजाप—disunion.
मुद्रा—seal.
प्रख्याप्य—having announced in public.

Page 9

भाण्डागार—treasury.
कटक—camp.
अपक्रान्ताः—absconded.

Page 10

अपराग—disaffection.
अभियोण—marching against enemy.
अराति—enemy
अवसरः—proper time.

## Page 11

कार्यगौरवेण—owing to importance of business.

उद्घाट्य—having opened.

सन्धि—compromise.

वाचिकं—oral message.

## Page 12

उपायनीकृत—presented.

गत्यन्तराभावात्—having no other means.

## Page 13

शूनायतनात्—murderess.

मैत्री—friendship.

स्वस्थः—pleased.

पित्र्यम्—belonging to his father.

## Page 14

आजह्रे—performed.

कषायित—perturbed.

अक्षशौण्डेन—skilled in playing with dice.

प्रतिदेवनं—every play.

वाचंयमेषु—silent.

## Page 15

विस्फारित—opened

अत्युत्कटं—excessive.

सांत्ववादैः—with conciliatory words.

## Page 16

पणः—value agreed by both parties in stipulation.

प्रतिपन्न—accepted.
अमर्षितः—furious.

Page 17

संनाहयामास—made ready.
चक्रव्यूहं—a circular array of troops.
अरौत्सीत्—arrested.
परेद्युः—next day.

Page 18

अनक्षिगोचरतया—owing to invisibility.
आकालिकं—untimely.
फलिष्यति—will burst in pieces.

Page 19

पलितधवल—grayish white.
वैशसं—slaughter.
प्रार्थितं—attacked.

Page 20

विह्वलम्—delirious.
अयाचित—unexpected.
स्तोक—a little.

Page 21

निभृतम्—silent.
समन्तात्—on all sides.
आहितां—shown.

Page 22

संज्ञाम्—a gesture.

तृषितः—thirsty.
चटुल—tremulous.

Page 23

केशहस्त—collection of hair.

Page 24

ऋद्धिमान्—rich.
उपस्थान—worship.

Page 25

शिञ्जित—tinkling.
निर्यातय—send out.
दाक्षिण्य—courtesy.
प्रणय – request.

Page 26

कर्णासुत विद्या—science of theft.
जर्झर—old or torn.
दूरक्ष—difficult to save.
न्यासीकृतः—entrusted.

Page 27

दुर्दिन—cloudy day.
काष्ठा—extremity.
अभिसारिका—a woman who meets her lover in place of assignation.
प्रवहणं—a letter for woman.

Page 28

प्रास्थिषि—I started.
निगल—iron chain.

आरक्षक—watchman.

Page 29

निर्भर्त्स्य—having threatened.
अधिकरणस्थान—court of justice.

Page 30

यादृच्छिक—unexpected.
दशावैषम्य—adversity.

Page 31

अधिकरणिक—judge or magistrate
उच्छून—swollen.
ग्रीवालिकाः—neck.

Page 32

विवरीतुम्—to explain.
अपवारित—covered.

Page 33

नियतिवैषम्य—adversed fate.
घोषणा—proclamation.

Page 34

दुर्ललिताः—proud
श्रमणकः—a Budhist ascetic.

Page 35

वेशवाट—residence of prostitutes.

Page 36

रन्ध्रान्वेषी—seeking week point.
असमीक्ष्यकारी—acting inconsiderately.

### Page 37

**যবীয়সী**—younger.
**সৌষ্ঠব**—beauty.
**প্রকৃত্যমিত্রং**—enemy by nature.

### Page 38

**সার্থবাহকুলম্**—company of traders.
**প্রতিরোধকাঃ**—thieves.

### Page 39

**অন্তপাল**—frontier guard.

**অন্তরা**—on the way.

### Page 40

**দারিকা**—a girl.
**আবুত্ত**—sister's husband.
**উপজাপ**—bringing over to one party.

### Page 41

**প্রাশ্নিকঃ**—judge.
**সুনীতিঃ**—a plan.

### Page 42

**শ্বঃ**—to-morrow.
**পরেদ্যুঃ**—next day.
**ম্লায়ন্তী**—growing withered.
**দোহদ**—a kind of manuring of plants before budding.

### Page 43

**প্রতিজজ্ঞে**—promised.

दुर्जातसमये—at the time of danger.
प्रमदवनं—pleasure garden.
व्यतिकरम्—the incident.

Page 44

अरिक्त—not empty—having something as present.
अवमुच्य—having removed.

Page 45

सोपसर्ग—eclipsed with planets indicative of evils.
कार्त्तान्तिक—astrologer.
अलिन्द—a place before the door.
दर्वीकरः—serpent.

Page 46

अलंकर्मीणां—skilful.
अभिषेणयितुं—to march against.
महासाराणि—valuable.

Page 47

अभिजनवती—of high birth.
पत्रोर्ण—a silk garment.
पारितोषिकं—a present.
विहतप्रतिबन्धं—without obstruction.

Page 48

ऊरु—thigh.
व्रीडिताः—ashamed.
उपस्थाय—having worshipped.

Page 49

जयोदाहरणं—news of victory.
बाध्यमानाः—troubled.

Page 50

प्रावर्तत—was commenced.

विक्लवा—confused in mind.

अप्रतिपद्यमाना—not taking into consideration.

Page 51

देवतासमय:—a conventional agreement of the gods.

विधिविभव:—power of fate.

स्फुलिङ्ग—a spark of the fire.

Page 52

जालिक—bird-catcher.

और्वशेय:—son of Urvasi.

विमर्द:—war.

Page 53

सांयुगीन:—skilled in war.

भद्रपीठे—in throne.

Page 54

प्रलोभयितुं—to attract.

कौशिकी—a river.

उन्मादयितृकं—intoxicating.

अधित्यका—upper part of the mountain.

मालिनी—a river.

Page 55

सूदयन्—killing.

निश्श्वापदं—destitute of beasts.

यथोद्दिष्टं—according to their desire.

Page 56

उपलब्धुं—to know.

अभिवर्तनेन—by rolling.

सन्धिबन्ध—joints of the body.

**Page 57**

असांनिध्यात्—owing to absence.
द्वैधीभूत—having doubt.
निरुपप्लवं—without disturbance.

**Page 58**

वेतस—ratan.
विस्रम्भकथितानि—confidential talks.
अपदेश—pretext.
दर्भांद्दि—read as दर्भाद्द.

**Page 59**

आसज्यमान—attracted.
उपहित—placed.
प्रवास—being away from home.
आपन्नसत्वा—pregnant.

**Page 60**

स्वस्तिवाचनिक—offering blessings.
उपायंस्त—married.
प्रत्यायक—making clear.

**Page 61**

प्रवात—an airy place.
ऊढपूर्वा—really married.
धीवर—fisherman.
प्रतिकृति—a picture.

**Page 62**

छेद:—break.
सार्थवाह—a merchant.
वैक्लव्य—dejection.

Page 63

शाकुन्तलेय—son of Shakuntala.
औरस—a legitimate son.
पारुष्यं—cruelty.

Page 64

उपलम्भ—acquisition.
स्मृतिवैकल्य—forgetting.

Page 65

धुर्यपुरुष— man of business.
सतीर्थ्य—a fellow student.
वैजयन्तिका—a flag.
ईहमाना—trying.
घटयितुम्—to accomplish.

Page 66

आन्वीक्षकी—metaphysics.
प्रणिधाय—sent.
स्रजं—a garland.
अदसीयं—of his.
उपसंहृतवती—attracted.
करेणुका—a female elephant.
धात्रेयिका—daughter of nurse.

Page 67

अनुबध्यमान—being requested.
विहस्त—compounded.
क्षामक्षाम—very much emaciated.
प्रतिच्छन्दकं—picture.
विनोदन—means of diversion.

Page 68

कुब्जक—name of a creeper.
इतिहास—ancient stories.
पञ्जर—a cage.
निगलित— fettered.
करपत्र—a saw.

Page 69

आस्कन्दितुं—to kill.
बहुलीभवन्तीम्—spreading.
परापतन्—coming.

Page 70

संवलित—smeared.
तत्वरे—became hasty.
अलिन्द—a terrace before a house.

Page 71

प्राग्भार—multitude or heap
द्विगुणित—doubled.
उपकरणम्— implement.
दुर्वार—resistless.
पर्यवष्टब्धवान्—surrounded.

Page 72

अपोढ—removed.
कोण—a corner.
प्रेक्षणीय—beautiful.
निर्विशेष—equal.
परार्ध्य—highly esteemed.

Pag

यवनिका—screen.
सुश्लिष्ट— well fitted.

कृतक—simulated.
समुन्मीलित—excited.
वामशील—not favourable.

Page 74

विस्रम्भालाप—confidential talk.
सार्वजनीन—public.
पक्षद्वार —a side gate.
अभियोग—attack.

Page 75

अन्यनन्तरीभवितुं—to assist.
तिलशः into pieces.
विप्रलंभ—deceiving.

Page 76

कापालिक—follower of Jaina religion.
अभिज्ञाय—having recognised.
संस्तुत—acquainted.
संस्त्याय—dwelling-place.
द्रोणी—valley.

Page 77

अभियोग—practice.
वैश्वानर—fire.
प्रपात—precipice.
निर्वृति—happiness.

Page 78

महीयसि—praiseworthy.
वैधात्र—son of Brahma.
उपचार—religious rites.

निमन्त्रयांचक्रे—invited.
सप्ततन्तु—sacrifice.

Page 79

अवस्कन्द—union or assault.
अर्थ्य—true.

Page 80

भैरव—fearful.
प्रमाथ—killing.
ओंकार—commencement.
आशर—rakshasa.

Page 81

प्रतीष्टाः—accepted.
आडम्बर—uproar.
क्षुरप्र—sword.

Page 82

मङ्गलोपहारिकम्—presented at the time of marriage.
विषमव्यवसाय—cruel action.
समुत्तेजयामास—induced.
द्वैधम्—breaking.
प्रमापणम्—destroying.

Page 83

निरन्तराय—without hindrances.
उपमर्दकः—a destroyer.
परिच्याव्य—making devoid of.

Page 84

आगामिक—impending.
प्रकृति—subjects.
अरिभय—danger arising from allies.

एकायनीभूय—having joined together.
असान्निध्य—absence.

Page 85

पर्युत्सुकः—eagerly desirous.
तपनीयमयम्—made of gold.
वैमनस्यं—sorrow.

Page 86

हतक—wicked.
अध्यक्षयित्वा—having seen.
वृषस्यन्ती—loving.
वञ्चयित्वा—having deceived.

Page 87

समुत्प्रेक्षित—foreseen.
कञ्चुकित—concealed.
प्रणिधाय—sent.

Page 88

प्रतिश्रुत—promised.
विक्षिप्त—killed.
विषम—fearful.
पाथोनाथ—ocean.

Page 89

वाचाट—talkative.
विक्षिप्त—thrown.
संवर्तसमय—the time of universal destruction.
युयुत्सा—a desire to fight.
बुक्का—the heart.
नासीर—the front of the army.

जिघत्सा—desire to eat.
प्रधनं—battle.

Page 90

पीयूषाशनाः—gods.
कौलीन—an evil report.
पातिव्रत्या—read as पातिव्रत्यया
वैमानिक—gods.
सीमन्तित—divided.
लोपामुद्रा—name of the wife of the sage Agasthya.
प्रवृत्ति—news.

Page 91

वात्सल्य—kindness.
तीर्थसलिल—holy water.

Page 92

उदीर्ण—arrogant.
उपप्लुत—disturbed.
संभाव्य—giving respects.
स्वातन्त्र्य—independence.

Page 93

दोहदः—longings.
अपदान—events.
उपधान—a pillow.

Page 94

अपसर्प—a spy.
शुद्धान्त—zanana.
अन्तर्जलम्—in water.
दारक—child.

Page 95

त्रयी—the three Vedas.

आनुष्टुभ—a metre having eight letters in each line.

यदृच्छया—by chance.

Page 96

प्रमादः—carelessness.

अभ्यागत—guests.

अलीक—false.

Page 97

अब्रह्मण्यं—exclamation of distress.

अपचार—fault.

अन्तरेण—without.

भूतार्थ—true meaning.

Page 98

स्तनित—rumbling of thundering clouds.

परस्पर्श—touched.

निर्भर—accomplished.

संवाद—conversation.

Page 99

दुर्विपाक—evil result.

अनुहरमाण—resembling

Page 100

अथाचि—it is said.

दुर्दान्तः—having pride.

पर्यवरुद्धः—surrounded.

अभियुज्यमानं—attacked.

द्रवीभूत—melted.

Page 101

विरेमतुः—became silent.
संवादिनी—resembling.
उपोद्बलयति—supports.

Page 102

प्रतिपत्ति—respect.
संदर्भ—a portion of the work.
विश्वंभरा—goddess of earth.

Page 103

असंविदाना—not knowing.
आलेख्य—picture.
प्रसूति—child.

Page 104

विलयः—disappearance.
चारित्र—good conduct.
प्रशस्य—having praised.
देवयजन—a place of sacrifices.
उपतस्थिरे—worshipped.

Page 105

कनिष्ठ—younger.
मातामह—maternal grandfather.
उत्खात—destroyed.
सानुषङ्ग—connected with each other.

Printed by RAMZAN ALI SHAH at the National Press, Allahabad.